विषयः, आश्रितश्चायं द्विधा विभागः सकलसूत्रभाष्यकृद्भिर्वृद्धैरपि निबन्धकृद्भिः, युक्तश्चेति स एव स्वीकार्यः। तत्र रात्रिसन्धौ परेद्युरेव यागः "अपराह्णेऽथवा रात्राविति लौगाक्षिवचनात्" "पश्चान्ना उपवस्तव्याः पश्चाद्योऽभियष्टव्या इति गोभिलवचनाच्च। नन्वस्तमयादूर्द्ध्वं पर्वसन्धौ चतुर्द्दश्यामस्तमयात् प्रागूर्द्ध्वं वा समाप्तायां अमावास्यायाः क्षत्ररात्रियोगित्वे तत्रैव दोषादि युक्तं "तद्यदेष एतां रात्रिमिहामा वसति तस्मादमावास्या नाम तं गोभिरनुष्ठाय समभरन्निति श्रुत्या रात्रियुक्तायाममावास्यायां दध्यादिरूपस्य सोमस्य सम्भृतिर्द्देवैः कृतेत्युक्तत्वात्। न च "पश्चाद्योऽभियष्टव्या इति वचनविरोधः, अहोरात्रव्यापिन्यामपि तस्य सम्भवात्। न च "अपराह्णेऽथवा रात्रावित्येतद्विरोध', तस्य पौर्णमास्यामपि सम्भवात् स्मृतित्वेन दुर्बलत्वाच्च। उच्यते। रात्रिशब्दस्य तिथिरूपपलक्षकत्वात् "तदहरेवैष पुरस्तान्न दृश्येत तदहरुपवसेदिति कश्चिदहःशब्दस्यापि दर्शनात्, "स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्दृश्येत तदहरुपवसेदिति कश्चिदहःशब्दस्यापि दर्शनात्, "स यत्रैव एतां रात्रिं पुरस्तान्न पश्चाद्दृशे" इत्यत्र पूर्वस्मिन् रात्रिशेषे पुरस्ताद्दर्शनं उत्तररात्र्यादौ पश्चादेकस्यामेव वा पुरस्तात्पश्चाच्चादर्शनं वक्तव्यं। आद्ये पक्षे वा दिवामावास्या नैव स्यात्। द्वितीये पक्षे उत्तररात्रावपि तद्रूपं विद्यते इति नैव भवेत्। अथोच्येत उत्तररात्रौ प्रतिपदो विद्यमानत्वात्तस्मात्तो दर्शनं प्रतिपद्यपि भवतीति।

आह कर्कोपाध्यायः।

दर्शनं प्रायतः प्रतिपद्येव भवतीति।

कात्यायनस्त्वमावास्याशेषे स्वाह।

अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।
अमावास्याष्टमेंऽशे च ततः किल भवेदणुः॥ इति।

तदसत् यदि रात्रिसम्बन्धादपि शास्त्रतो निषिद्धं सिद्धं तत उद्-यात्प्राक् प्रतिपत्प्रवेशः तत्रोपवासो न कर्त्तव्यः पूर्वदिने चतुर्दशी रात्रावपि विद्यत इति तथापि चन्द्रसद्भावाच्च कर्त्तव्य एव।

उक्तञ्च स्मृतौ।

भूतदिने चतुर्दश्यां अमां कुर्वन्ति ये द्विजाः।
विहारं पितृयज्ञञ्च तत्सर्वं निष्फलं भवेदिति॥

'विहारः' विहरणमिध्यर्थं आहवनीयादेः इत्यर्थः।

तत्र तल्लोपः प्रसज्येत तस्मात् "पञ्चाम्ना उपवस्तव्याः पञ्चाद्योऽभि-यष्टव्या इत्येतदेव युक्तं तस्माद्रात्रिसन्धौ परेद्युर्यागः। ननु रात्रि-योगिन्यामपि पञ्चदश्यां प्रतिपदि त्रिमुहूर्त्तायां द्वितीयायां "त्रिमु-हूर्त्ता द्वितीया चेदिति वचनात् पञ्चदश्यां यागः कस्माच्च क्रियते विशेषाग्रमादिति ब्रूमः। यद्यपि रात्रिसन्धिशास्त्रं ह्यस्थाह्यर्थापिन्यां प्रतिपदि सावकाश, त्रिमुहूर्त्तद्वितीयाशास्त्रं दिवासन्धौ सावकाशं, यद्यपि च "पञ्चाद्यो यष्टव्या इत्येतदुपमर्द्दनैव इत्तेरेतद्बाधकाश्रित-दोषाभावस्तथापि रात्रिसन्धिशास्त्रस्यानन्यथासिद्धत्वात् "पञ्चाद्यो यष्टव्या इत्यत एवोत्तरदिने यागे प्राप्ते पर्वचतुर्थांशस्य प्रातः पूर्वदिने प्राप्त्यभावाद्यागमाप्त्यभावे त्रिमुहूर्त्तशास्त्रे यावत् पूर्वस्मिन्नहनि प्राप-यितुमवकाशमपेक्षते तावद्रात्रिसन्धिशास्त्रं दृष्ट्वा विषयान्तर मेव चिन्त-यति,तत्रोपरिष्टाद्वक्ष्यामः। तस्मात् रात्रिसन्धौ परेद्युर्याग इति सिद्धं, अपराह्णसन्धावपि परेद्युर्यागः।

ननु ।

चतुर्दश्याः चतुर्यामे अमा यत्र न दृश्यते ।
श्वोभूते प्रतिपच्च भूते कथ्यादिकी क्रिया ॥

इति वचनात् पूर्व्वेव कस्माद्य गृह्यते । तथाच वचनान्तरं ।

चतुर्दश्यौ चतुर्याममतावास्या न लभ्यते ।
श्वोभूते प्रतिपच्चेत् स्यात् पूर्व्वान्नेव कारयेत् ॥ इति ॥

यद्यपि चतुर्दश्या यामचतुष्टयव्यापिन्यमावास्या न लभ्यते किन्तु तदेकदेशव्यापिन्येव तथापि श्वोभूते प्रतिपदस्ति चेत् पूर्व्वेद्युरेवोपवासदत्यर्थः । कात्यायनवचनेन पश्चादभ्युदय अमावास्येनेष्टेति, यच्चोपवासदिने प्रतिपत्सम्भवः तत्र चिरविस्मृष्टिः प्रायश्चित्तत्वेनोक्ता । उच्यते । तस्याः प्रतिपदि सद्भावे द्वितीयासद्भावेऽप्युपपत्तिरन्यथासिद्धापराह्णशब्दस्यात्र बौधायन उक्ता, तस्माद्द्वितीयेऽहनि यागः । ननु यदा पूर्व्वेद्युः प्रात. पर्व्वचतुर्थांशाभावः परेद्युश्च प्रातः पर्व्वचतुर्थांशः तदा कस्मिन्नहनि यागः क्रियते । न तावत् पूर्व्वेद्युः तत्र प्रात काले पर्व्वचतुर्थांशादिसमावेशाभावेन यागकालाभावादपराह्णपर्व्वसन्धित्वाच्च । नापि परेद्युर्यागः तत्रापि विहितकालाभावात् ।

अत्र केचिदाहुः अपरेद्युर्यागः कर्त्तव्यः पूर्व्वेद्युः पर्व्वचतुर्थांशादिविहितकालासम्भवात् प्रतिपच्चतुर्थांशे यागनिवर्त्तकाभावाच्च । यस्त्वयमस्ति निषेधो निवर्त्तकः ।

न यष्टव्य चतुर्थांशे यागे' प्रतिपदः क्वचित् ।
इत्यादि तद्विलुपन्ति श्रुतिरेषा सनातनीति ॥

उच्यते मध्याह्नसन्धिविषयोऽयं प्रतिषेधो नापराह्णसन्धिविषय', तत्र

परेद्युर्यागविधानात् । ननु अपराह्णसन्धावेव परेद्युर्यागप्राप्तेस्तत्र च प्रतिपच्चतुर्थांशसम्भवात् प्राप्तिपूर्वकत्वाच्च निषेधस्य तत्रैव सामञ्जस्यं मध्याह्नसन्धौ तु पूर्वेद्युर्यागविधानात् प्रतिपच्चतुर्थांशगन्धोऽपि नास्तीति निषेधानुपपत्तिः । अचोच्यते । "पञ्चादयोऽभियष्टव्या इत्यस्य सम्पूर्णायां तिथौ खण्डतिथौ वा साधारणत्वं, तत्र द्वितीयेऽहनि प्रतिपच्चतुर्थांशस्य प्रातःकाले सम्भवात् प्राप्तिपूर्वकत्वं प्रतिषेधस्य घटत एव । न चैतावता प्रतिपच्चतुर्थांशे यागानुष्ठाने प्रत्यवायभाक्त्वं । "पञ्चादयोऽभियष्टव्या इति तत्र यागस्य विहितत्वाद्विहितप्रतिषेधे च विकल्प एव स्यात् ।

उक्तञ्च दृष्टदार्त्तिके ।

> यद्यपि प्राप्य यत्किञ्चिद्विधिना तुल्यगोचरः ।
> प्रत्यवायमतिं कुर्याद्विकल्पाश्रयणाच्च तत् ॥
> दृष्टौ विधि-निषेधौ हि तुल्यवीर्य्यैकगोचरौ ।
> विकल्पेन तयोरेकः प्रामाण्यमनुतिष्ठतां ॥
> अङ्गीकृतनिषेधानां नैष दोषोऽस्त्यकुर्वतां ।
> चोदनालक्षणत्वन्तु न प्रामाण्यं विधेस्तदा ॥
> विधेः प्रामाण्यपक्षे तु प्रतिषेधनिराकृतेः ।
> चोदनालक्षणं धर्मं न दोषोऽस्त्यनुतिष्ठतामिति ॥

न च "पञ्चादयोऽभियष्टव्या इत्यस्याः प्रतिपद्भागचतुष्टयेऽपि साधारणत्वेन सावकाशत्वात् "नयष्टव्यं चतुर्थांश इत्यस्य प्रतिपच्चतुर्थांशविषयत्वेन निरवकाशत्वात् विकल्पो न युक्त इति वक्तव्य । यतः सामान्यविषयस्यापि विधेर्विशेषनिषेधेन नात्यन्तबाधः क्रियते तदधीनलाभत्वात् ।

तदुक्तं वार्त्तिककारैस्तत्र टीकायां।

अन्तर्दुर्बलोऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति प्रतिषेधः प्रदेशेनारभ्यविधाने चेत्यत्र वक्ष्यत इति।

तस्माच्छास्त्रप्राप्तार्थस्यात्यन्तप्रतिषेधासम्भवात् "नानुयाजेषु ये यजामहं करोतीतिवद्विकल्पः, न तु तद्वदेव, तर्हि पर्युदासाश्रयणा-द्विकल्पः परिहर्त्तुं शक्यते। तथाहि साक्षाच्चोदितकालस्य पर्वचतुर्थां-शप्रतिपदाद्यभागत्रयात्मकस्य प्रातःकाले दिनद्वयेऽप्यविद्यमानत्वेन यागानुपपत्तेर्नित्यचोदितकर्मणः परित्यक्तुमशक्यत्वात् प्रयोगवचनसा-मर्थ्येन किञ्चिद्विगुणेऽपि काले यष्टव्यमित्यापतिते पूर्वेद्युः प्रातःकाले पर्वचतुर्थांशाभावेऽपि पर्वमात्रसद्भावाद्यष्टव्यं, अथ वा परेद्युः प्रतिप-दाद्यभागत्रयाभावेऽपि प्रतिपन्मात्रसद्भावाद्यष्टव्यमिति प्रतिपच्चतुर्थां-शेऽपि पाक्षिकी प्राप्तिर्न देवैरपि वारयितुं शक्यते। तस्माल्लक्षणया पर्युदासप्रतिपादने विकल्पस्यापरिहार्य्यत्वाद्वरं मुख्यार्थत्वाय विकल्प-प्रसक्तावपि प्रतिषेधवाचक एव नञस्तु। किञ्च पर्युदासासम्भवा-दपि प्रतिषेधः। तथाहि यदि तावत् प्रतिपच्चतुर्थांशस्य वर्जितत्वा-विशेषात्। अथ चतुर्थांशवर्जितायां प्रतिपदि यजेतेति तर्हि पर्वचतुर्थांशे यागो न प्राप्नोति। अथ प्रतिपच्चतुर्थांशवर्जिते चोदिते काले यजेतेत्युच्यते तर्ह्यपराह्णपर्वसन्धावुत्तरमहश्चोदितकालस्तत्रापि प्रतिपच्चतुर्थांशमात्रमेवावशिष्टमिति तत्पर्युदासत्वेन कुत्रान्यत्र विधी-यते। अथ नोद्यन्तमादित्यमीक्षेतेति धात्वर्थेन नञः सम्बन्धादनीक्ष-णसङ्कल्पवद्यागसंकल्पो विधीयते। उच्यते। युक्तं तत्र रागप्राप्तमीक्षणं पर्युदस्यत इति। इह त्वपराह्णपर्वसन्धौ परेद्युर्यागः शास्त्रप्राप्त इति न

पर्युदसितुं शक्यते । न चाच यथा चोदकप्राप्तस्यार्षेयवरणस्य "नार्षेयं वृणीते" इति प्रत्यक्षोपदेशेन बलीयसा पर्युदासः तथा न शक्यते वक्तुं । उभयोरपि प्रतिपच्चतुर्थांशप्रापकपर्युदासयोरुपदेशशास्त्रत्वात् । न च यथा यागमात्रे प्राप्तस्य ये यजामहे इत्यस्य यागविशेषेष्वनुयाजेषु पर्युदासस्तथाच सम्भवति । न हि पर्युदासशास्त्रस्य पूर्वाह्णापराह्णादिपर्वसन्धिसाधारणस्यापराह्णादिपर्वसन्धिशास्त्रं प्रति विशेषशास्त्रता सम्भवति। न च पर्युदासशास्त्रस्य श्रुतित्वेन बलीयस्त्वं, श्रुतित्वासिद्धेः । तथाहि भाष्यकारेण चतुर्थांशनिषेधः कात्यायनवचनादित्युक्ता "न यष्टव्यं चतुर्थ्यंशइति श्लोकः पठितः । तस्माच्छ्रुतिमूलत्वाभिप्रायेण "श्रुतिरेषा सनातनीत्युच्यते। ननु पर्युदासवचने तव्यप्रत्ययश्रवणेन विधेः स्पष्टत्वादपराह्णादिपर्वसन्धिवचने वर्त्तमानापदेशत्वेन कल्प्यविधित्वादिलम्बप्राप्तौ वैषम्यं, नैतद्वं, प्रतिपदा पर्युदस्यते चतुर्थांशो वा यागो वेति सन्देहो यावता विलम्बेनापनीयते तावतैतत्रापि वर्त्तमानापदेशो वा पञ्चमलकारोवेति सन्देहोऽप्यपनीयत एव। पर्युदासे नञोपलक्षणार्थत्वं इत्यधिको दोषः। तस्मात् पर्युदासासम्भवात् प्रतिषेधोऽवश्यम्भावी । एवं विकल्पे स्थिते मध्याह्नसन्धिविषयत्वं निषेधस्यापराह्णसन्धिविषयत्वं विधेरिति । यतो लौगाक्षिणा पूर्वाह्णापराह्णसन्धिविषयभेदेन पूर्वोत्तरदिनयोर्यागव्यवस्था कृता "पूर्वाह्णे वाथ मध्याह्ने इत्यादिना । यत्तु "पर्वणोयश्चतुर्थांश इति वाक्यन्तदपि न प्रतिपच्चतुर्थांशे यागं निवारयति । तथाहि न तावच्चतुर्थांशं निषेधति, अविहितत्वान्निषेधत्वेनाप्रतीतेः। नापि पूर्वेषामन्येषामंशानां विधायकत्वेनार्थादितरमंशं निवारयति, विधिविभक्तिशून्यत्वेन विधित्वस्याप्रतीतेः ।

नाप्युपरि हि देवेभ्यो धारयतीतिवद्विधिं कल्प्यते, सिद्धवदनुवादात् प्रमाणान्तराविरोधाच्च विधयः कल्प्यन्ते। इह तु "पर्व्वणोयच्चतुर्थांश इत्यत्र प्रतिपद्भागत्रयविधाने चतुर्थांशनिवृत्तिप्रयोजने कल्प्यमाने "न यष्टव्यं चतुर्थांशे" इति चतुर्थांशस्य याजिकाभ्यनुज्ञाशास्त्रं विरुध्यते। न च वाच्यं विज्ञेय इति विधिप्रत्ययः, "अर्हे कृत्यतृचश्चे-त्यर्हार्थेनापि घटमानत्वात्, भवतु वा विधिप्रत्ययः, तथाप्यन-पेक्षिते ज्ञाने न तु यजतौ। अथ निर्वपत्यादिभतिवदनपेक्षितधा-तुमतोऽपि विधिरिष्टमर्थं विधत्त इति। उच्यते। सापि क्लिष्ट-कल्पने वेति न विलक्षणचतुर्थांशाभ्यनुज्ञाशास्त्रबाधने सामर्थ्यं। तथाहि धात्वर्थः श्रुत्या विधीयते तदसम्भवे धात्वर्थोऽन्यत्र विधीयते धात्वर्थ वाक्यात् विधीयते। यत्र त्वन्यदेवान्यत्र विधीयते तदतिक्लिष्टं। अथ तद्दोषपरिहारार्थं धात्वर्थो ज्ञानमेव विधीयते कथं तर्हि कालस्य प्राप्तिः। अथ ज्ञानं विधीयमानं ज्ञेयसंस्कारद्वारमिति ज्ञानसंस्कार्य्यस्य कालस्य यागे विनियोगमन्तरेणानुपपद्यमानं विनियोगविधिं कल्प-यतीत्युच्यते। तत्र संस्कारानुपपत्त्या संस्कार्य्यविनियोगकल्पनायाः सक्तधिकरणे निराकृतत्वात्। ननु "सोमाभावे पूतीकानभिषुणु-यादिति तमसौ भक्ष प्रयच्छेदिति च भक्षाभिषवसंस्कारान्यथानुप-पत्त्या फलचमसस्य पूतीकानाञ्च यागविनियोगो यथा कल्पितस्तथे-हापि ज्ञानसंस्कार्य्यस्य कालस्य विनियोगविधिं कस्मान्न कल्प्यते। उच्यते। युक्तं तत्र सोमेन यजेतेति श्रुतविनियोगस्य सोमस्य सोमममिषुणोतीति सोमचमस इति च समाख्यया भक्षाभिषव-संस्कारविधिर्न विरुध्यते इति, सिद्धे भक्षाभिषवयोः सोमसंस्कारत्वे

निरूढ़संस्कारस्य द्रव्यान्तरसंस्कारविधानेन सम्यक् द्रव्यस्य पूर्वद्रव्यसमानकार्यत्वकल्पनं, इह त्वनिरूढ़ोज्ञानसंस्कारः संस्कार्यस्य कालस्य कृप्तमानान्तरलभ्यविनियोगादृते न निर्वहति मन्त्राधिकरणन्यायादिति युक्तमेव ।

किञ्च सोमद्रव्यस्यैव विनियुक्तस्य कदाचिदलभ्यमानस्य प्रतिनिध्युपादाने प्राप्ते नियममात्रं क्रियते "पूतीकानभिषुणुयादिति, न त्वपूर्वो विनियोगः क्रियते । न त्विह विनियोजकान्तरेण विना सिद्ध्यति, तस्मात् "समुद्रं मनसा ध्यायति पृथिवीञ्च मनसा ध्यायति देवञ्च मनसा ध्यायतीतिवदारादुपकारकत्वमेव कालज्ञानविधानस्येति न काले प्रापकत्वं । भवतु वा ज्ञानसामग्रीसान्निध्ये ज्ञानस्यार्थसिद्धत्वेनाविधेयत्वात् कालविधित्वमेव कालज्ञानविधानस्येति । तथापि यागकाल इत्येकस्मिन् पदे किञ्चिदुद्दिश्य किञ्चिदुपादीयत इत्येतदनुपपन्नमेव, यथैतत् ऋद्धैः खिष्टकृतं यजतीतिवदपक्कृतं प्रथमभक्ष इतिवञ्च, यथा हि वषट्कृतविशेषितभक्षणे प्राथम्यसम्बन्धो विधातुं न शक्यते तथा पदान्तरोपात्तपर्वचतुर्थांशादिविशेषितस्य कालशब्दार्थस्य यागकाल इति समासपदैकदेशप्रतिपादितस्यैकदेशान्तरार्थेन सह सम्बन्धो विधीयत इति नोपपद्यते समस्यमानपदयोः परस्परसम्बन्धात् प्राक्पदान्तरसम्बन्धानुपपत्तेः "परिपूर्णं पदं पदान्तरमाकाङ्क्षतीति न्यायात् । अथ "पर्वणोयश्चतुर्थांश आद्याः प्रतिपदस्त्रय इति पदान्तरोपात्तस्य कालस्य यागेन सम्बन्धो विधीयत इति।उच्यते । तथापि यागकाल इति समासपदगतेनोपसर्जनीभूतेन यागेन सह सम्बन्धः प्राप्नोति।

किञ्च फलेन वा कारकेण वा क्रियाणां सम्बन्धो भवति । न च कालो यागस्य फलं अश्रवणात् । नापि कारकं, कारकविभक्तिनिर्देशाभावात् । न हि "प्रतिपदि यजेतेतिवत् पर्व्वचतुर्थ्यादेरधिकरणविभक्तिनिर्देशो दृश्यते । तस्माल्लक्षणयाधिकरणार्थं कल्पनीय इत्यपरः क्लेशः ।

अस्तु वा कालविधित्वं, तथापि प्रतिपदाद्यभागत्रयविधानं नोपपद्यते । तथाहि इह कालद्वयमुपात्तं पर्व्वचतुर्थ्यांश्च प्रतिपदाद्यभागत्रयञ्च । न चोभयमेकेन वाक्येन विधातुं शक्यते, यागानुवादेन कालद्वये विधीयमाने वाक्यभेदप्रसङ्गात् । अथ कालस्य निमित्तस्वरूपकत्वात् कालयोर्योगो विधीयते न तु यागे कालाविन्युच्यते तर्हि सुतरामेव वाक्यभेदः । तत्र कालभेदेन यागसम्बन्धभेदप्रतीतेः । अथ प्रतिपत्सु समार्गेषु विधीयमानेष्वपि यथा न वाक्यभेदस्तद्वदिहापि प्रतिकालं यागे विधीयमानेऽपि न वाक्यभेद इत्युच्यते । तच्च युक्तं । तत्र यद्वत् समार्गयोरेकेन यत्नेन सम्बन्धं विधाय श्रौते विधितात्पर्य्ये पर्य्यवसिते सत्यार्थिका व्यापारभेदाः प्रतियत्नमुपजायमाना अपि न वाक्यं भिन्दन्तीति । इह तु पर्व्वचतुर्थ्यांश्च प्रतिपदाद्यभागत्रयस्य चैकेनैव श्रौतविधितात्पर्य्येण यागसम्बन्धो येन शब्देन विधीयते तथाविधशब्दोत्पत्त्युभयोः पृथगुपात्तत्वात्तस्मात्तस्य यागस्यानेकस्मिन् सम्बन्धे विधीयमाने रेवतीवारवन्तीयाधिकरणपौर्णमास्यधिकरणादिपूर्व्वपक्षवद्वाक्यभेदः । ननु तद्वदेव तर्हि विशिष्टविधानेन वाक्यभेदपरिहारः कस्मान्नेष्यते । उच्यते । विशिष्टविधानेऽभ्युपगम्यमाने यागान्तरापत्तेर्न दर्शपूर्णमा-

ययोरय कालविधि सिद्ध्यति। दर्श-पूर्णमासयो शास्त्रान्तरप्राप्तयोरेकेन वाक्येन कालद्वयसम्बन्धे वाक्यभेद उक्त एव। अथ "अर्द्धमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्यत्र लक्षणया सन्धौ मिनोतीति विधाय यथा वाक्यभेद परिहृत तद्वत् पर्व प्रतिपद्भागाभ्या सन्धिलक्षणया वाक्यभेदपरिहार इत्युच्यते। तन्न युक्त। तत्र सन्धिदेशे लक्षितेऽर्थप्राप्तत्वेनान्तर्वेदि-बहिर्वेदिशब्दार्थयोरनुवादसम्भवात्। इह तु सन्धिकाले लक्षितेऽपि न पर्वचतुर्थांश प्रतिपद्भागत्रयस्यानुवाद सिद्ध्यति। पूर्वापरयोरंशयोर्नियतयोर्विषमयोरर्थप्राप्त्यभावात्।

किञ्च सम्बन्धविधानस्य किं लक्षणाक्लेशेन "सन्धौ यजेतेति श्रुत्या सन्धिकाले विहितोऽपि प्रयोगायोग्य इति तत्समीपलक्षणाया प्राप्ताया किं पर्यन्त काल इत्यवध्यपेक्षाया पूर्वापरसामीप्यावधिविधानार्थं वाक्यमागतमिति वक्तव्यम्। यदि पर्वचतुर्थांशादिविधायकमेतद्वाक्य भवेत् "पर्वणोयश्चतुर्थांश आद्या प्रतिपदस्त्रय इति, तद्पीदानीमनुपपद्यमान। यदि पुनरपि तमेव सन्धि लक्षयितु गच्छति तदा किं तेन कृत भवति, तस्माद्यागस्य कालद्वयसम्बन्धविधाने वाक्यभेदोऽपरिहार्य्य। अथ यो यागकाल इति यागकालमनूद्य स पर्वण श्चतुर्थोंऽश आद्या प्रतिपदस्त्रयोऽशाश्चेति विधीयते। तर्हि यागकाल इति विशिष्टानुवादे एकस्माद्वाक्यभेद, पर्वचतुर्थांशस्य प्रतिपद्भागत्रयस्य चोभयोर्विधानादपरोवाक्यभेद। यत्तदोर्व्यत्यासेनान्वय-इत्यपरोदोष। अथ पर्वचतुर्थांश प्रतिपद्भागत्रय चानूद्य तयोरुभयोर्यागकालत्व विधीयते। एव तर्हि पर्वणोयश्चतुर्थांश इति विशिष्टानुवादादेकोवाक्यभेद, आद्या प्रतिपदस्त्रयोंऽशा इत्यपि विशि

किञ्च फलेन वा कारकेण वा क्रियाणां सम्बन्धो भवति। न च कालो यागस्य फलं, असाध्यत्वात्। नापि कारकं, कारकविभक्तिनिर्देशाभावात्। न हि "प्रतिपदि यजेतेतिवत् पर्व्वचतुर्थ्यादेरधिकरणविभक्तिनिर्देशो दृश्यते। तस्माल्लक्षणयाधिकरणार्थः कल्पनीय इत्यपरः क्लेशः।

पयोरेव कालविधिं सिध्यति। दर्श-पूर्णमासयोः शास्त्रान्तरप्राप्त-योरेकेन वाक्येन कालद्वयसम्बन्धे वाक्यभेद उक्त एव। अथ "अर्द्ध-मन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्यत्र लक्षणया सन्धौ मिनोतीति विधाय यथा वाक्यभेदः परिहृतः तद्वत् पर्व-प्रतिपद्भागाभ्यां सन्धि-लक्षणया वाक्यभेदपरिहार इत्युच्यते। तन्न युक्त। तत्र सन्धिदेशे लक्षितेऽर्थमात्रत्वेनान्तर्वेदि-बहिर्वेदिशब्दार्थयोरनुवादसम्भवात्। इह तु सन्धिकाले लक्षितेऽपि न पर्व्वचतुर्थांश-प्रतिपद्भागत्रयस्यानुवादः सिध्यति। पूर्व्वापरयोरंशयोर्नियतयोर्विषमयोरर्थप्राप्त्यभावात्।

द्यनुवादाद्द्वितीयोवाक्यभेद, तयोरुभयोर्यागकालविधानात्तृतीयोवाक्यभेद, पर्वचतुर्थ्यागस्य प्रतिपद्यागद्वयस्य च विधायकान्तराभावादनुवादोऽपि न शक्यते कर्त्तुमित्यपरोदोष ।

किञ्च कालस्यानुपादेयत्वात् कालविधिपरेषु वाक्येषु कालमुद्दिश्य कर्म्मैवोपादीयते, तदिह यदि पर्वचतुर्थ्यागमुद्दिश्य स यागकाल इति विधीयते तर्हि विधेयस्य यागकालस्यापि कालरूपत्वेनानुपादेयत्वादुद्देश्यत्वमेव प्राप्नोति। न चोद्देश्यद्वयस्य मिथ सम्बन्ध सम्भवति। न चानयो समुदायीकरणार्थं एक शब्दोऽस्ति, येन समुदायस्य यागसम्बन्धविधानाद्वाक्यभेद परिह्रियेत। ननु यागकाल इति कालशब्देनोभयमेकरूपतया परामृश्य यागसम्बन्धोविधीयते। तन्न। याग-कालशब्देन याग-कालयो सम्बन्धविधानमशक्यमित्युक्तत्वात्।

किञ्च याग-कालशब्देन पर्वचतुर्थ्याद्यादिकालोऽनूद्यते पुनस्तेनैव शब्देन यागस्य कालसम्बन्धो विधीयते, तदा वाजपेयोक्त वैरूप्यमापद्येत। न ह्येकस्मिन्नेव वाक्ये एकमेव वस्तु तद्वाक्यगतमेव किञ्चिदपेक्ष्यानूद्यते किञ्चिदपेक्ष्य विधीयते इति सम्भवति। यदि तु वैरूप्यपरिहारार्थं पर्वचतुर्थ्यपद्यादिपरामर्शमन्तरेण शुद्धस्यैव कालस्य यागसम्बन्धो विधीयते। तदयुक्त। कालसम्बन्धविधानमन्तरेणापि सिद्धे। अथ "यागकाल स विज्ञेय इति तच्छब्देन पर्वप्रतिपद्यागान् परामृश्य यागसम्बन्धोविधीयते, तथापि पूर्व्वोक्त वैरूप्य तद्वस्थमेव।

किञ्च स इत्ययमस्वच्छ एकवचनान्तात्पुर कालभागान् परा-

मष्टुं न शक्नोति । अथानुषङ्गन्यायेन पृथगेकैकं परामृशतीत्युच्यते । नैवम् । एकस्मिन्वाक्ये प्रतिपदमनुषङ्गेणैकस्यानेकेषु सम्बन्धेषु दृश्यमानेषु वाक्यभेदप्रसङ्गात् ।

किञ्च एकवचनान्तस्य स इत्यस्य तच्छब्दस्य "आद्या' प्रतिपदस्तथ इत्यत्र बहुवचननिर्देशात् अनुषङ्गोऽपि नोपपद्यते । यथा गच्छतामित्यस्य संयज्ञैरङ्गानीत्यत्र नानुषङ्गः ।

किञ्च यत्तदोर्नित्याभिसम्बन्धात्पर्वणोयश्चतुर्थांश इति पर्वचतुर्थांशे यच्छब्दश्रवणात् स एव तच्छब्देन परामृष्टुं युज्यते न प्रतिपद्भागाः । अथ तत्रापि यच्छब्दोऽध्याह्रियते अध्याहृतयोः श्रुते गौणं सम्प्रत्ययात् पुनरपि न तस्य परामर्शः । भवतु वाध्याहारः तथापि प्रतिपद्भागा- इति बहुवचनान्तस्यैव यच्छब्दस्याध्याहारादेकवचनान्तेन तच्छब्देन पुनरपि कथं सम्बन्धः । अथ पर्वप्रतिपद्भागसमुदाय एकवचनान्तेन तच्छब्देन परामृष्टुं शक्यते इत्युच्यते । तन्न । एकावच्छेदमन्तरेण समुदायानुपपत्तेः । अयैकेन तच्छब्देनोपादानात् समुदायत्वमित्युच्यते । यथा विददाक्ये पौर्णमास्यादिशब्दोपादानादाग्नेयादीना समुदायत्वसिद्धिः, यथा वा राजसूयशब्देनोपादानादनुमत्यादीना मक्षादीनां[1] पवित्रादीनाञ्च यागादीनां समुदायत्वसिद्धिः । तन्न । तच्छब्दोपादानात् समुदायत्वं समुदायत्वादेकवचनान्ततच्छब्दोपादानमितीतरेतराश्रयापत्तेः । आग्नेयादीनान्तेकशब्दोपादानव्यतिरेकेणाप्येकोपाधिसम्बन्धोविद्यत एव । यदुक्तं कालविशेषयोगित्वं नाम तदुक्तम् । "एककालाभिसंयोगाद्विश्रामामपि कर्मणा । समुदायार्थेण

(१) अनुमत्यादीनामक्षादीनामिति क० ।

प्रक्रमैकदेशमन्त्रवत् ॥ इति। राजसूयेऽपि प्रकृतत्वविशिष्टयागत्वो-पाधिसद्भावात् समुदायत्वं भविष्यत्येकफलसाधनत्वाद्वा । नन्वत्रापि प्रकृतत्वविशिष्टकालत्वोपाधिसद्भावात् पर्वचतुर्थ्योश्च प्रतिपद्भागत्रयस्य च समुदायत्वं भविष्यति। मैवं। किं पदार्थरूपेण कालयोः प्रकृतत्वं, किं वा वाक्यार्थरूपेण, न तावद्वाक्यार्थरूपेण, महावाक्येऽवान्तरवा-क्यार्थविवक्षाभावाद्विवक्ष्यमाणेऽवान्तरवाक्यभेदप्रसङ्गात्। नापि पदा-र्थरूपेण, न हि पर्वणोयश्चतुर्थ्यां इत्यत्र कस्यचिदेकस्य पदस्यार्थे पर्व-चतुर्थ्यां प्रतिपद्भागत्रयं वा, तस्मान्न प्रकृतत्वावच्छेदात् समुदायत्वं पर्वप्रतिपद्भागानाम् ।

ननु यागसाधनत्वैकोपाधिसद्भावात् समुदायत्वं भविष्यति। नैतदेवम् । यागसाधनत्वात् समुदायत्वं, समुदायत्वादेकवचनान्तेन तच्छब्देन परामर्शः, तच्छब्दपरामर्शाद्यागविधानं, यागविधानाद्याग-साधनत्वं, यागसाधनत्वात् समुदायत्वमिति चक्रकापत्तिः । अत-एवैकावच्छेदमन्तरेण समुदायत्वानुपपत्तेः कालद्वयप्रतिपादकावेव शब्दौ कालद्वयसमुदायं लक्षयत इत्येतदपास्तम्। अथ 'पर्वणोऽशे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः' इति पर्वचतुर्थांशस्य याग-साधनत्वावगमात् पक्षादयोऽभियष्टव्या," "न यष्टव्यं चतुर्थांशे" इति वाक्याभ्यां चतुर्थांशवर्जितप्रतिपद्भागत्रयस्य यागसाधनत्वावगमात् 'पर्वणोयश्चतुर्थांश' इति वाक्यप्रमिते प्रागेव कालावयवानां याग-साधनत्वलक्षणस्योपाधेः सिद्धत्वात् 'पर्वणोयश्चतुर्थांश' इति वाक्ये तेषां समुदायापादनस्यानुपपन्नमिति न चक्रकापत्तिरित्युच्यते। तदयुक्तं। एते कालाः यागसाधनतयाभिधीयमानैः

वाक्यभेदापत्तेस्तत्परिहारार्थं समुदायरूपतयाप्येकत्वापत्तेर्विधेयानां कालभागानामपेक्ष्यते यागसाधनत्वमेव विधातुं । ननु यदि पर-मिदानीं समुदायत्वापत्तेः प्रागेव वाक्यान्तरैः कालभागानां याग-साधनत्वं सिद्धं किमिदानीं समुदायत्वापत्त्या क्रियते ।

किञ्च कालद्वयमिदं विधीयमानं किं समुच्चयेन विधीयते, किं वा विकल्पेन। न तावत् समुच्चयेन कालद्वयसम्बन्धः, तथा सत्युभयोरपि का-लयोर्यागानुष्ठानप्रसङ्गात् । नापि विकल्पेन, विकल्पो हि विरुद्धार्थयोः शास्त्रयोः परस्परतो विधानसामर्थ्याविर्भाव-तिरोभावादिना विरुद्ध-व्यापारचतुष्टयद्वयेन क्रमेण सम्पाद्यमानोऽपि गत्यन्तराभावात् खेदे-नैवाभ्युपेयते। तत्रैकेनैव विधानात् तावत्क्लेशोऽनुभूयत इति किमे-तद्वाजपेयीतवैरूप्यापत्तेः, एवं कालद्वयाभ्युपगमेन सर्वमेतदुक्तं ।

किञ्च प्रातरात्मकस्तृतीयोऽपि कालोऽग्नीषोमाप्त इति तस्मिन्नपि विवक्ष्यमाणे पूर्व्वोक्तेषु पक्षभेदेषु सुतरां वाक्यभेदादयः सम्भवन्ति, तस्मादतिमन्दशक्तित्वादस्य वचनस्य न प्रतिपद्यागत्रयविधानमुखेन चतुर्थांशव्युदासकत्वं, किं तर्ह्यनेन वचनेन क्रियते, न किञ्चित् क्रियते। किन्तु "पर्वणोंऽशे तुरीये तु कर्त्तव्येष्टिरिति पर्वचतुर्थांशे प्राप्ते "पञ्चा-दशोऽभियष्टव्या इति प्रतिपदि प्राप्तायां "प्रातर्यजध्वमिति प्रातःकाले प्राप्ते "न यष्टव्यं चतुर्थेऽंश इति पूर्व्वोक्तप्रकारेण प्रतिपत्तुर्यांशे विकल्पेन निषिद्धे वैकल्पिकनिषेधेन सूचितो यावत्कालराशिरवगम्यते, सामा-न्यस्तमासः स सर्वः पिण्डीकृत्यैकेन याज्ञिककारिकावाक्येन कथ्यते, स्मरणसौकर्य्यार्थं "पर्वणोयश्चतुर्थांश इति । यथा श्येन वेदिमुद्धन्नी-त्यादिमासाशास्त्रमात्रोऽर्थः पिण्डीकृत्यानूद्यते "एतानि वै दशयज्ञायु-

धानीति। यथाह वार्त्तिककार, "स्मार्देरुत्पत्तिसम्बन्ध कार्यैरुद्धृत्य नादिभि। तत्र यत्रायुधानीति प्राप्तमेवानुकीर्त्यते"॥ तथा "पर्वणोपञ्चतुर्थ्यां च इत्यपि नानाशास्त्रपिण्डीकृतानुवाद न पुन कस्यचित्कालस्य विधायकमेतत् येनार्थात् प्रतिपच्चतुर्थ्यां च युदस्येत्।

किञ्च "उक्तोमन्त्रीपिभिरित्युक्तशब्देन वाक्यान्तरैरुक्त एवार्थ स्मरणे सौकर्यार्थमेकत्र पिण्डीकृत्यानूद्यते न त्वपूर्वोऽर्थोऽनेन वचनेन विधीयत इति दर्शयति। तस्मात्प्रतिपदाद्यभागचयस्यैव याशकालत्वमिति विधानाभावात् "न यष्टव्य चतुर्थ्यां च इत्यनेन निषेधेनापि चतुर्थ्यां प्रत्यापत्तिकप्राप्त्याभ्यनुज्ञानपायाश्चात्यन्तमयागकालत्व प्रतिपच्चतुर्थ्यांमत्र। यद्यत्यन्तमनेन वचनेन विधायकेन भवितव्य तर्हि प्रातर्विधानमस्तु सर्वमन्यद्वाक्यान्तरप्राप्तमनूद्यते। नतु प्रात कालोऽपि "प्रातर्यजध्वमिति शास्त्रप्राप्त एव। नैष दोष। न हि पौरुषेयवाक्याना वेदमूलत्वापराधेन विधात्वत्व विहन्यते, सर्वस्मृतीनामप्रामाण्यप्रसङ्गात्। येषामपि वक्तृज्ञानानुमापकानि पौरुषेयवचनानि तेऽपि कथञ्चित पौरुषेयेषु वचनेषु विध्यनुवादविरोध्यनुवादविवेक कुर्वन्त्येव न पुन सर्वानुवादकत्व मन्यते। येनैवमाहु यथोदनालक्षण इत्यनूद्य स धर्म इति विधीयत इति। ननु यदि वाक्यान्तरप्राप्तोऽप्यर्थो विधातु शक्यते तर्हि पर्वचतुर्थ्यादिरपि कस्मान्न विधीयते। उच्यते। न पर्वचतुर्थ्यादिर्वाक्यान्तरप्राप्त इति न विधीयते किन्त्वनेकविधाने वाक्यभेदभयाद्वाक्यान्तरप्राप्तत्वेन कथञ्चिदनुवदितुमपि शक्यत्वाच्च विधीयत। ननु यदि एक एव विधातव्य इति पर्वचतुर्थ्यादिकाल्स्य वाक्यान्तरविहितत्वात् प्रात कालो विधी-

यते तर्हि विपरीतं कस्मान्न भवति । उच्यते । "पर्वणोयश्चतुर्थांश इति चतुर्थांशस्य यच्छब्दोपबन्धाद्विधेयत्वं, प्रातःकालस्तु तदभावाद्विधीयते ।

किञ्च पर्वचतुर्थांशस्य "आद्याः प्रतिपदस्त्रय इत्येतद्विहितस्य यागकालः स इति तच्छब्देन परामर्श इत्यपरः क्लेश' ।

किञ्च येनैव हेतुना वाक्यभेदभयादिना कालविनियमेनेन न विधीयते तेनैव पर्वचतुर्थांशादिरेकोऽपि कालो न विधीयते, तथाहि पर्वणश्चतुर्थोंऽश इति, त्रय एते अर्थाः किं तेषां अरुणैकहायनीन्यायेन प्रथमं क्रियया सह संबन्धमनुभूय पश्चात्पार्ष्णिकः परस्परसम्बन्धः, आहोस्वित्प्रथमं परस्परसम्बन्धः पश्चात्क्रियया सह सम्बन्ध' इति यदापि प्रथमं क्रियया सम्बन्धः तदापि किं विशिष्टविधानन्यायेन क्रियया सम्बन्धः, अहोस्वित्क्रियानुवादेन तेषां सम्बन्ध' इति । यदि तावद्विशिष्टविधानं तथा सति कर्मान्तरापत्तेर्न दर्श-पूर्णमासयोरयं कालविधिः सिध्यति । अथ क्रियानुवादेन पर्वणश्चतुर्थांशस्य च सम्बन्धो विधीयते, तदा प्राप्तक्रियानुवादेनानेकगुणविधानादेकस्माद्वाक्यभेदः पुनस्तेषां परस्परसम्बन्धविधानेऽपि स एव दोष । अथ वाक्यभेदपरिहारार्थं चतुर्थांशादिविशेषणमनादृत्य पर्वमात्रस्य यागसम्बन्धो विधीयते, तर्हि पर्वणि यदा कदाचिद्यागः प्राप्नोति । चतुर्थांशग्रहणञ्च विधित्वेनानुवादत्वेन वाऽनुपपद्यमानं व्याहन्यते ।

ननु पर्वणि यदा कदाचिदीजान कदाचिच्चतुर्थांशेऽपि यजत इत्यनुवाद' सम्भवति । नैतदेव । पाक्षिकानुवादस्य न्यायविदामसम्मतत्वात् ।

अथ चतुर्थांशयागयोः सम्बन्धो विधीयते, तदपि यस्य कस्यचिद्-
द्रव्यस्य चतुर्थांशो यागार्थं इत्युक्तं स्यात् न त्वभिमतविशेषोऽर्थः सिध्यति।

सर्व्वांशविधानपक्षेऽपि सा विधानुपपत्तेरंशिनि कस्मिंश्चिदाक्षेप्ये बुद्धिस्थः पर्व्वरूपोऽंशिविशेषः किमिति त्यज्यते। उच्यते। बुद्धिस्थोऽपि विध्यसंस्पृष्टो न सिध्यति। अथ यदि विधिना स्पृश्यते तर्हि तदेवानेकविधानमापद्यते। ननु विधिना स्पृश्यमानोऽप्यर्थात् स्पृश्यते न श्रुत्या न तथानेकविधानं दोषः। मैवं। न ह्यनेनांशिविशेषेण विनांशविधेरनुपपत्तिर्येनार्थादिममेवांशिविशेषं स्पृशेत्। न हि साधारणस्यानुपपत्तिरभिधानमात्रेण बुद्धिस्थे विशेषे पर्यवस्यति, तथा सति सर्व्वत्र गुणविधिहत्वादः "सोमेन यजेतेति यागमात्रं विधाय विधौ पर्य्यवसिते या साधारणी द्रव्याकाङ्क्षा सा विधानमन्तरेणैव बुद्धिस्थे द्रव्यविशेषे सोमे पर्य्यवस्यतीति कथं विशेषविधानं स्यात्। यद्यपि प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यभेदः प्रसज्यते तथाप्येकगुणविधानमेवास्तु, इतरस्तु गुणविशेषः सामान्यानुपपत्त्याक्षिप्यत-इति वक्तुं शक्यत्वात्।

नन्वेवं तर्हि "पर्व्वणोऽंशे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः"। इति वाक्येन कथं पर्व्वचतुर्थांशो यागाय विधीयते तथापि पूर्व्वोक्तानां दोषाणां अविशिष्टत्वात्। उच्यते। "पर्व्वणोऽंशे तुरीय इति पर्व्वांशरूपं पदार्थद्वयं परस्परसम्बन्धविशिष्टमेकीभूतं यागाय विधीयत इति विधेयभेदाभावान्न वाक्यभेदः। ननु "पर्व्वणोऽंशे तुरीय इति पर्व्वांशयोः परस्परसम्बन्धो विधिव्यापारमन्तरेण न सिध्यति। सत्यं न सिध्यति। किन्तु विध्यन्तरमेवानयोः परस्परसम्बन्धविधायकमस्ति तद्यथा।

पञ्चदश्याः परः पादः पवादेः प्रथमास्तयः ।
कालः पार्वणयागस्य अन्यथा तु न विद्यते ॥

इति पञ्चदश्याः पादः इत्यनयोः सम्बन्धो विधीयते। नन्वेवं पञ्चदश्या आद्येऽपि पादे यागः प्राप्नोति अथ परः पादः इति विशिष्यते तर्हि वाक्यभेदः। नैष दोषः। "सन्धौ यजेतेति सन्धिकालस्य यागार्थस्य विहितत्वायोग्यत्वात् सन्धिसमीपवर्त्तिनि काले लक्षयितव्ये क्रियासमीपकालो लक्षित' किं नाडिका किं वा प्रहरद्धिंमर्द्धं तिथिर्वेत्यपेक्षायां पञ्चदशीपादः सामीप्यविशेषाकाङ्क्षापरिपूरणाय विधीयमानः सामीप्यावष्टम्भेन सन्धिप्रत्यासन्नतर एव सिद्ध्यति न दूरवर्त्ती। नचच वाक्ये न केवलं पञ्चदशीपादयोः सम्बन्धः प्रतीयते किन्तु यागसम्बन्धोऽपरः प्रतीयते। सत्यमेवं। किन्तु "पर्वणोऽशे तुरीये तु कर्त्तव्येष्टिरिति विधीयमानोऽनूद्यते यागांशिन्या अपि प्राप्तेरनुवादसम्भवात्। तस्मात् पञ्चदशीवाक्ये पञ्चदशीपादमात्र विधीयते। तस्य सम्बन्धस्य यागसम्बन्धमात्र "पर्वणोऽशे तुरीये लित्यनेन विधीयते। तस्य पर्वांशस्य तुरीयत्वमविहितमपि सन्धिशास्त्राच्छिन्नमनूद्यत इति पूर्वमेवोक्तं। "पर्वणोयश्चतुर्थांश इत्यनेन प्रात कालसम्बन्धमात्रं विधीयते सर्वमन्यदनूद्यते। तस्मात् क्वचिदप्यनेकार्थविधानाभावान्न वाक्यभेदः। ननु पञ्चदश्याः पादस्य सम्बन्धो वाक्यान्तरविहितो यागसम्बन्धविधानपरे वाक्ये वाक्यभेदं न करोतीति यद्युच्यते तर्हि "पर्वणोयश्चतुर्थांश इति वाक्येनापि पञ्चदशीपादस्य यागसम्बन्धो विधातुं शक्यत एव। सत्य शक्यत एव। किन्त्वसौ विशिष्टकालो यागाय विधातव्य' स प्रतिपदिशिष्टस्य प्रातरात्मकस्य कालस्य विधानेनापि

वाक्योपपत्तौ न युक्त विशिष्टस्य वाक्यान्तरसम्पादितत्वेन विशिष्ट-विधाने वाक्यभेदे परिहृतेऽपि स्वरूपमात्रविधानापेक्षया किञ्चिदि-धिगौरवस्यापरिहार्य्यत्वाद्विशिष्टापादकवाक्यान्तरसापेक्षत्वाच्च । यत्र तु स्वरूपमात्रविधानयोग्य किञ्चिदुपात्त नास्ति तत्र गत्यभावा-द्विशिष्टमपि यागाय विधीयत एव यथा "पर्व्वणाग्रे तुरीये विति ।

ननु यदि कालभागयो विशिष्टत्वमेकेन वाक्येन क्रियते तस्य विशिष्टस्य यागसम्बन्धोऽपरेण वाक्येन तर्ह्यनेनैव प्रकारेण प्रतिपदाद्य-भागत्रयस्य यागसम्बन्ध कस्मान्नेष्यते । तथा हि "पञ्चदश्या पर पाद' पश्चादे' प्रथमात्यय"। इति पश्चादे' पादा अपि सन्निधानौ-पात्तेपवलात् सन्निप्रत्यासन्ना' पादा प्रथमा एव सिद्धन्तीति । नैतदेव । इह कालावयवद्वयसम्बन्ध प्रतीयमान आस्ते। न चैक-स्मिन्नेव सम्बन्धे विधेये इतरस्मिन् ज्ञातव्ये प्रथमप्रतीत पञ्चदश्या पादस्य च सम्बन्ध हित्वा पश्चादवगत पश्चादे' पादानाञ्च सम्बन्धो विधीयत इति कोऽत्र नय । किञ्च पञ्चदश्या पादस्य च सम्बन्ध पाठसिद्ध पश्चादे' पादानाञ्च सम्बन्धोऽध्याहार्य्य इत्यपि तस्य दौर्बल्य। किञ्च विधीयता नाम काम पश्चादे' पादानाञ्च सम्बन्ध-स्तथापि केन वाक्येन सयोगो विधीयते न तावत्तनैव, वाक्यभेद-प्रसङ्गात्। नापि 'पर्व्वणो यस्तुर्थोऽत्र आद्या प्रतिपदस्तय इत्यनेन, तस्य प्रात कालसम्बन्धविधानेनैव चरितार्थत्वमित्युक्तत्वात्। न चान्यदा-क्यमस्ति येन प्रतिपद्भागत्रयस्य यावान् सम्बन्धो विधीयते। तस्माद्भा-गत्रयविधानासम्भवात् "न यष्टव्य चतुर्थेऽशे' इत्येतदेव चतुर्थांशनि-षेधकमवशिष्यते । तच्च प्रतिपच्चतुर्थांशस्यापि विकल्पेन प्राप्तिमनु-

आनातीत्युक्तं। तस्मात् पूर्वाह्णव्यवस्थयापराह्णादिपर्वसन्धौ प्रतिपच्च-तुर्थांशो न निषिद्ध्यते पूर्वाह्णपर्वसन्धौ तु निषिद्ध्यत इति सिद्धं। तथाच त्रिकाण्डमण्डनेनोक्तं।

> सन्धिर्यद्यपराह्णे स्याद्याग प्रात परेऽहनि ।
> कुर्वाण प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥

तदेतत्त्रिकाण्डमण्डनादिमतमन्ये नानुमन्यन्ते। कस्मात् पूर्वाह्णाप-राह्णसन्ध्ययोरुभयोरप्युपवासे द्वितीयेऽहनि च यागेऽनुष्ठीयमाने पञ्चा-द्दे प्रतिपच्चतुर्थांशस्य च सम्भवात् "पञ्चादयोऽभियष्टव्या"। "न यष्टव्य चतुर्थेऽशे" इति शास्त्रद्वयस्याप्यनुग्राह्यत्वात्सन्ध्याह्नसन्ध्यावेकमपराह्ण-सन्ध्यावपरमिति व्यवस्थाया प्रमाणाभावात्। न च लौगाक्षिवा दय प्रमाण, तस्य पूर्वोत्तरदिनद्वययागव्यवस्थापरत्वेन विधि निषेधव्यव-स्थाया तात्पर्याभावादसम्भवाच्च। तथाहि आदित्योदयसमनन्तर पर्वसन्धौ तद्द्वयागे क्रियमाणे पञ्चादिशास्त्रस्य निषेधानुग्रहदर्शनात्। अपराह्णसन्ध्यावप्यपराह्णसमयात्पर्वसन्धौ द्वितीयेऽहनि यागानुष्ठानेऽप्यु-भयोरनुग्रहदर्शनात्। एव रात्रिसन्धावप्युभयोरनुग्रह ।

अथ प्रतिपच्चतुर्थांशे यागाभावात् पूर्वाह्णसन्धौ पञ्चादिशास्त्र-स्यानुग्रहो नास्तीत्युच्यते, तर्ह्यपराह्णसन्धावपि प्रतिपदाद्यभागे यागो नास्तीति पञ्चादिशास्त्रमनुग्रहाक्षमुच्यते। तथा शास्त्रान्तरवशादाद्ये भागत्रये यागेऽनुष्ठिते 'पञ्चादयोऽभियष्टव्या इत्यस्यार्थोऽपि क्रियत एव। तथा लक्षणवादिदर्शपूर्णमासयागो न प्राप्नोतीत्येकदेशे एव-मनुष्ठान। यदपि "न यष्टव्य चतुर्थेऽशे इति निषेधान्यथानुपपत्त्या प्रतिपच्चतुर्थांशे यागकल्पन तदप्यवार्यमस्य स्थान स्यादित्येतदधि-

कारणविरुद्धम् । अत्र द्वार्थिंयं वृणीते इत्यस्य चीन् वृणीते इत्य-स्मिन् विद्यमाने न चतुरो वृणीत इति निषेधकल्पविधिपरत्वं न सम्भवतीत्युक्तं । तद्वदिहापि "पञ्चाद्योऽभियष्टव्या इत्यस्य "पञ्चादेः प्रथमास्तय इत्यस्मिन् विद्यमाने "न यष्टव्यं चतुर्थेऽंश इति निषेधा-द्विधन्तरकल्पना न सम्भवतीति । तस्मात् "न यष्टव्यं चतुर्थे श इति नित्यानुवादोऽयं न चतुरो वृणीते इतिवत् । अथ वा पर्युदासोऽयं, "पञ्चाद्योऽभियष्टव्या इति प्रतिपदि यागकाल उच्यमाने "न यष्टव्यं चतुर्थेऽंश इत्यनेन चतुर्थांशवर्जिते प्रतिपदि यष्टव्यमित्युच्यते, एतदेव स्पष्टीकृतं स्मृत्यन्तरे "पञ्चादेः प्रथमास्तय इति, "आद्याः प्रतिपदस्त्रय-इति च । एवञ्च सति "पञ्चाद्योऽभियष्टव्या इत्यस्य "न यष्टव्यं चतुर्थेऽंश इत्यस्य च प्रतिपद्भागवचनतया मद्वैकश्रुतिमूलत्वं भविष्यति । यत्तु पर्युदासपक्षे दूषणमभिहितं अपराह्णपर्वसन्धौ षड्घटिकात्मके च तिथिद्वये पूर्वेद्युः पर्वचतुर्थांशाभावेऽपि पर्वहतीयांशे यष्टव्यम्, परेद्युः प्रतिपदाद्यभागचयाभावेऽपि चतुर्थभागे यष्टव्यमिति प्रयोग-वचनसामर्थ्यादापतितो विकल्पो न देवैरपि वारयितुं शक्यते, पर्युदासस्य न नञो मुख्योऽर्थः किन्तु लक्षणैवेति । तदसत् । यदि हि पर्वहतीयभागवत् प्रतिपच्चतुर्थांशो न पर्युदस्तः स्यात् तदैवमपि भवेत्, इह तु "न यष्टव्यं चतुर्थेऽंश इति पर्युदासबलात् पर्वहतीय-भाग एव याग प्राप्नोति । न च पर्युदासे लक्षणेत्येकादशीनिर्णये दर्शित, अनेनैव न्यायेन निषेधपक्षेऽपि पूर्वेद्युरेव याग प्राप्नोति । अनुपपत्त्या हि पर्वहतीयप्रतिपच्चतुर्थभागयोर्विकल्पेन यागे प्राप्ते "न यष्टव्यं चतुर्थेऽंश इति प्रतिपच्चतुर्थांशो यागस्य निवारितत्वात् ।

अन्यथा शुद्धप्रतिनिषिद्धत्वेन माषाणां ग्रहणे प्राप्ते षष्ठेऽध्याये जैमिनिनाभिहितं "प्रतिषिद्ध वा विशेषेण विहित तु श्रुतिरिति, कात्यायनेन च "प्रतिषिद्ध प्रत्ययादिति, तथापि वक्तुं शक्यते प्रतिषिद्धानामपि माषाणामस्तु ग्रहणमिति। अस्यात्र परिहारोऽर्थप्राप्ते निषेधो बाधक एवेति स इह समान इति। यत् किञ्चिदेतत्पर्व्वचतुर्थांशस्य श्रुतत्वमसिद्धमित्युक्तं। तन्न। कात्यायनेन "श्रुतिरेषा सनातनीत्यभिधानात्। यत्तु भाष्यकारेण कात्यायनवचनादित्युक्तं तच्छ्रुतित्वेऽप्यविरुद्धं "श्रुतिरेषा सनातनीत्यस्य कात्यायनवचनत्वात्। दिङ्मात्रमत्र दर्शितं ग्रन्थविस्तरभयादिति। तस्मात् यथोक्त एव काले याग इति सिद्धं।

अन्ये त्वेवमाहुः "न यष्टव्यं चतुर्थं प्रहरे यद्यपि तत्पूर्वाह्णसन्धिविषयमिति व्याख्येयं। न च पूर्व्वाह्ण-मध्याह्नसन्धिशास्त्रं हि पर्व्वचतुर्थांशे यागविधायकं न तत्र प्रतिपच्चतुर्थांशे यागस्य प्राप्तिरस्ति अत प्राप्त्यभावेन प्रतिषेधानर्थक्यं प्राप्तिपूर्व्वकत्वात् प्रतिषेधस्येति वाच्यं। तत्र प्राप्त्यभावेऽपि "पश्चाद्दोषोऽभिपद्यत इत्यनेन प्राप्तिसम्भवात्। न च "आद्या प्रतिपदस्तय इत्यनेनाप्युपसंहार इति वाच्यम्। अस्य कालान्तरोपलक्षकत्वेनाविरोधादुपसंहारपरत्वानुपपत्तेरिदमद्येऽप्युक्तयागकालचतुष्टयाभावे प्रत्यग्र यागकालान्तरमभ्युपगन्तव्यम्। न च तस्यान्यप्रापकं शास्त्रमस्ति। अतश्चास्मात्ताणां अवश्यापरत्वेनापूर्व्वकालविधायकत्वानुपपत्तेः उभयपरत्वे वाक्यभेदप्रसङ्गात् केवलकालविधिपरत्वे च अवश्या निष्प्रामाणिकी स्यात् तस्मात्कालान्तरोपलक्षकमेवैतदिति सिद्धं। तदयुक्तं। किमा

कारण लक्षणाप्रसङ्गात् यागकालसम्बन्धस्य त्रिमुहूर्त्ता द्वितीया चेत्यादिशास्त्रेणार्थसिद्धेः, अतो न वाक्यभेदोऽपीति यत्किञ्चिदेतत्। तस्माच्च प्रतिपच्चतुर्थांशे याग इति सिद्धम्।

ननु हेमन्तकालेऽह्नामतिह्रस्वत्वात् किञ्चिन्न्यूने चतुर्दशघटिका-मात्र आवर्त्तने भवति, तत्र तिथिवृद्धौ सत्यां षोडशनाडिकोऽपि पर्व्वचतुर्थांशो भवति, तत्र सन्ध्योपक्रमकालादारभ्य प्रातः पर्व्वचतु-र्थांशोऽस्ति द्वितीयदिने च प्रातः प्रतिपत्तृतीयांशस्तत्र कुत्र यागः। अत्र केचिदाहुः अपराह्णपर्व्वसन्धित्वात्परेद्युर्याग इति। तदयुक्तं। "पर्व्वणोऽंशे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः। द्वितीयासहिते पक्षा-द्यूर्द्ध्वमाश्वलायनाः" ॥ इति हारीतवचनात् "त्रिमुहूर्त्ता द्वितीया चेत्यादिवाक्यविरोधाच्च। अपराह्णसन्धिशास्त्रं तु त्रिमुहूर्त्तशास्त्रा-विरुद्धे विषये व्यवतिष्ठते। नन्वपराह्णसन्धिशास्त्राविरुद्धे विषये पूर्व्वा-ह्णपर्व्वसन्धौ त्रिमुहूर्त्तशास्त्रं किमिति न व्यवतिष्ठते। उच्यते। पूर्व्वा-ह्णसन्धौ त्रिमुहूर्त्तानद्वितीयाप्रसक्त्यभावात् त्रिमुहूर्त्तग्रहणमविवक्षित-त्वात्। त्रिमुहूर्त्तद्वितीयाशब्देन व्यवहिततरनिष्प्रयोजनपूर्व्वाह्णपर्व्वस-न्धिलक्षणाप्रसङ्गाच्च चन्द्रदर्शनदिने यागनिषेधकपञ्चवाक्यविरोधाच्च। अपराह्णपर्व्वसन्धिविषयत्वे तूक्तदोषाभावात् तद्विषयतैव युक्ता।

किञ्च सत्यपि सन्धिसामीप्ये त्वत्पक्षे तस्यानीप्सितत्वान् विशेषः। तस्मात्मानविंशतिकालसम्भवात् तत्रैव याग इति। यदा तु सार्द्ध-प्रहरद्वयं किञ्चिदधिकं चतुर्दशी पञ्चदशी मुहूर्त्तत्रयं प्रतिपत्प्रतिपदि मुहूर्त्तत्रयं द्वितीया तदा पूर्व्वस्यां यागः "यस्यां तिथावस्तमियात् सूर्य्यस्त्रिमुहूर्त्तकः। यागं दान-जपादिभ्यस्तामेवोपक्रमेत् तिथिम्" ॥

इति वचनात् । ननु,—

पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः ।

कालः पार्व्वणयागस्य अन्यथा तु न विद्यते ॥

इत्येतत्प्रतिपादितयागकालव्यतिरिक्ते काले यागो न युक्त, तन्न, यथा पक्षाद्योऽभियष्टव्या इत्येतत्प्रतिपादितयागकालव्यतिरिक्ते काले पर्वचतुर्थांशे वचनान्तराद्याग इष्यत एवमिहापि भविष्यति। यदा तु सम्पूर्णा चतुर्द्दशी पञ्चदशी प्रतिपद्यादित्यास्तमयादर्वागेव समाप्यते, द्वितीयाप्रभृतेर्वात्यन्तिकः क्षयः तदा पूर्व्वद्युरेव यागः ।

चतुर्द्दशी च सम्पूर्णा द्वितीया क्षयगामिनी ।

चतुरिष्टिरमायां स्यात् भूते कन्यादिकी क्रिया ॥

इति वचनात्। यदा चतुर्द्दशी सम्पूर्णा पञ्चदश्यां न्यूनत्रिमुहूर्त्ता प्रतिपत् प्रतिपदि त्रिमुहूर्त्ता द्वितीया तदा पूर्व्वद्युरेव याग ।

त्रिमुहूर्त्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी ।

अन्वाधान चतुर्द्दश्यां परत सोमदर्शनात् ॥ इति वचनात् ।

तथा ।

आदित्येऽस्तमिते चन्द्र' प्रक्षीण उदयाचरा ।

प्रतिपद्यत्तिपत्तिः स्यात् पञ्चदश्यां यजेत च ॥ इति।

यदा पञ्चदश्यां मुहूर्त्तत्रयाधिका प्रतिपत् प्रतिपदि च तावती द्वितीया ततोऽधिका वा तदा पूर्व्वानुष्ठानमिति तन्मुहूर्त्तत्रयाधिकेषु मुहूर्त्तेषु विद्यमानत्वात् पूर्व्वस्यामेव याग ।

उक्तञ्च ।

प्रतिपदि समुदिता चेदग्नीनन्वादधीत भूतदिने ।

विरमति पर्वद्दिवा चेत् स च कालं तु पौर्णमास्याः ॥

अन्यापि ।

अपूर्णेऽनस्तगे चैव औपवस्थमन मत ।

प्रतिपद्यु यदा पश्चेद्दृष्टौनो वाभ्युदितः शशी ॥ इति ।

ननु यदेतत् "यदरिष्टिरमावास्यां भ्रते कस्यादिकौ क्रिया" इति, तथा "प्रतिपद्यतिपत्ति. स्यात् पञ्चदश्यां यजेत च" इति, तथा "अन्वाधाग चतुर्दश्यां परतः सोमदर्शनात्" इत्येवमादिभिः पञ्चदश्यां यागविधानं कृतं तत्पर्वचतुर्थांशे प्रातर्विद्यमाने तु भवतु। "पर्वणोयश्चतुर्थांश इति पर्वचतुर्थांशस्यैव यागकालत्वेन विधानात्पर्वद्वतीयचतुर्थांशे यागो न युक्त इत्युच्यते ।

अर्वागस्तगमाद्यच द्वितीया तु प्रदृश्यते ।

तत्र याग न कुर्वीत विश्वेदेवाः पराङ्मुखा' ॥

इत्येतावन्मात्र ।

यदि तु श्रूयते तर्हि पर्वचतुर्थांश एव पूर्वस्मिन्नहनि याग इत्युक्तमादिह तु "त्रिमुहूर्त्ता द्वितीया चेदित्यादिनिमित्तविशेषे पञ्चदश्यां यागविधानात् न पर्वचतुर्थांशानुरोधेन बाधो युक्त । तस्माद्यथोक्त एव काले याग इति सिद्ध । यदा तु पौर्णदिनान्त्यघटिकायां पर्वसन्धिर्मुहूर्त्तत्रयद्वाभाव प्रात पर्वद्वितीयांश. परेद्युस्त्रिमुहूर्त्ता द्वितीया तदा पर्वद्वितीयांशे याग ।

तथाचाश्वलायन ।

पर्वणोऽशे तृतीये तु कर्त्तव्येष्टिर्द्विजातिभि ।

द्वितीयांशहित यस्माद्दूषयन्त्याश्वलायनाः ॥

यदा तु मुहूर्त्तत्रयादूर्ध्वं पूर्वेद्युः पर्वचतुर्थांशस्य प्रवेशः परेद्युश्च मुहूर्त्तषट्कादूर्ध्वं प्रतिपच्चतुर्थांशः स्यात् तदा परेद्युर्यागः, मुहूर्त्तषट्कात्प्राक् प्रवेशे तु पूर्वेद्युः ।

यदाह गार्ग्यः ।

यज्ञकालस्तिथिर्द्वैधे यद्गता यदि लक्ष्यते ।
पर्वं तचोत्तरं कार्यं हीने पूर्वमुपक्रमेत् ॥

कलाच मुहूर्त्तं न तु घटिका "त्रिमुहूर्त्ता द्वितीया चेदिति शास्त्रविरोधात् । स्मृतिप्रदीपकृताप्यत्र कलाशब्दस्य मुहूर्त्तार्थतोक्ता । पराशरवाक्ये तु षण्मुहूर्त्तास्तु विद्यत इति पाठः॥

अत्र वाक्ये केचिदिदवदन्ति । तथाहि चन्द्रदर्शने यागः सर्वथैव न कर्त्तव्यः, किन्तु तत्पूर्वदिने यागः पूर्वतरदिने त्वन्वाधानमिति तस्य वाक्यस्यार्थः प्रतिभाति, स चायुक्त आपस्तम्बोऽन्वाधान-याग-दिनयोरन्यतरत्र विकल्पेन चन्द्रदर्शनं परिहरणीयमित्याह न पुनर्नियमेन यागदिने चन्द्रदर्शनं परिहरणीयमिति । यथाह—

यदहर्न दृश्यते तदहरमावास्यां घो न इत्यार इति वेति ।

वाजसनेयिनोऽप्युभयोरन्यतरत्रैव चन्द्रदर्शनं नियच्छन्ति न पुनरुभयत्रापि ।

यथाहुः ।

तद्वैके दृष्ट्वोपवसन्ति तस्मात्दैवैनं न पुरस्तात्र च पश्चात् पश्येत तर्ह्येवोपवसेदिति च ।

कात्यायनोऽप्याह ।

चन्द्रादर्शनेनामावास्यामुपवसेत् सम्पूर्णेन पौर्णमासीमिति केचित् ।

लौगाक्षिरप्याह ।

यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्वीत दृश्यमाने-ऽप्यमावास्या भवन्तीति ।

तथा सोमदर्शनदिने यागविधायिका निषेधाधिकारश्रुतिर्दृश्यते।

यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्त इमान् लोकानभ्युदेष्यतीति एषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन् काले वाऽस्मिँल्लोकेऽर्द्धकं भवतीति यस्मिन्नहनि पुरस्तात्परतश्च सोमो न दृश्यते तदहर्यजत इति ।

तदेतेषां विरुद्धशास्त्राणां व्यवस्था पर्वविचारे प्रतिपादिता वक्ष्यमाणार्थमतानुसाराद्परार्द्धादिपर्वसम्बन्धी सोमदर्शनदिने यष्टव्यमन्यथा नेति ।

किञ्चैवं श्रूयते उत्तरामुपवसेदनिर्याचेति ।

तस्यार्थः किं पूर्वामुपवसेदुत्तरां वेत्यनिर्याय यत्र एतादृशं निश्चितं ज्ञानं नास्ति तत्रोत्तरामेवोपवसेदिति । एवं यन्देवेऽपि पेदुत्तरमेव पर्वोपवसनीयं किं पुनर्यदा पर्वविचारोक्तया व्यवस्ययोत्तरमेव पर्व निश्चितं प्रतीयत इति, तदनुसारेणैव "चिह्नद्दर्शा द्वितीया चेदिति वाक्यं व्याख्यानयं न स्वातन्त्र्येण । यदि तु स्वमतिमार्गे कथ्यते तावदध्याहारक्लेशेन प्रथमतो विधिघटितमाख्यातार्थपदसम्बन्धं तस्मिन्नपि पुनरनायासेन किञ्चिदपि न शक्यते । तथाहि यदि चतुर्दश्यामन्वाधानाय कर्म विधीयते तदैवं योजना, चतुर्दश्यामन्वाधानं कर्त्तव्यं परतः सोमदर्शनादिति । तच्चेदसुच्यते । अन्वाधानोत्कर्षः कथमत्र विधीयत इति । तथाहि प्रतिपद्यापराह्णिकी

यद्यपि द्वितीया तथापि चतुर्द्दश्यां सोमदर्शनात्परतोऽन्वाधान परच दिनेऽन्वाधान कर्त्तव्यमिति चन्द्रदर्शने यागनिषेधवदन्वाधानस्यापि निषिद्धत्वात् । तद्यथा "यदीदैव न पुरस्तात्र पश्चात्पश्चेत्तर्ह्येवोपवसेदिति चन्द्रदर्शनेनामावास्यामुपवसेदिति, "यदहर्न दृश्येत तदहरमावास्यामिति च, तस्माच्चतुर्द्दश्यां सोमदर्शनात्तत्परित्यागेनान्वाधानोत्कर्षविधानमेव युक्तं । अस्येव चतुर्द्दश्यां सोमदर्शनाच्चतुर्द्दशीतः परच दिनेऽन्वाधान कर्त्तव्यमिति चतुर्द्दशीग्रहणस्योभयच सम्बन्धाद्वाक्यभेदश्चतुर्द्दशीत इति विपरिणामकल्पना च स्यात् । उच्यते, न तावद्विपरिणामकल्पना चतुर्द्दश्यां सोमदर्शनादिति व्यवहितान्वयस्यादुष्टत्वाद्वाक्यभेदोऽपि नास्ति श्रुत्यर्थाभ्यां सम्बन्धद्वयाभ्युपगमात् ।

यथाह ।

श्रुत्यर्थाभ्यामनेकार्थविधानं न विरुध्यत इति ।

श्रौतान्वयनानात्वे हि वाक्यभेदो भवति ।

यथाह ।

कुमारिलः श्रौतव्यापारनानात्वे शब्दानामतिगौरवमिति ।

अतएवार्थिकत्वाद्द्वितीयसम्बन्धस्य शब्दविपरिणामकल्पनादोषोऽपि न प्राप्नोति । यथा रात्रिसत्रार्थवादत्वेनोपयोगिनापि प्रतिष्ठार्थीत् प्रतिष्ठाकाम इत्यधिकारेण विशेषणं भवन्ती न वाक्यं भिनत्ति, न च विपरिणामदोषं जनयति । ननु व्यवहितकल्पनादयो दोषा गत्यन्तराभावेऽभ्युपगम्यन्ते । अस्ति चिह गत्यन्तरं चतुर्द्दश्यामन्वाधानापकर्षविधानं नाम । उच्यते । यदि व्यवहितकल्पनादिभयादन्वाधानापकर्षविधानमाश्रीयते तर्हि तथापि कियन्तो दोषाः प्रसज्यन्ते तदाकर्णतां ।

तत्र। अनन्तरैकदोषवर्जं पूर्वोक्तसर्वदोषाणां तदवस्थत्वात् प्रतिपदि कदाचिदपि द्वितीयाऽसम्भवादसम्भाव्यमानार्थत्वमप्युक्तं स्यात्। अथ प्रतिपत्सम्पृक्तायां द्वितीयायां सोमदर्शनादित्युच्यते। तन्न। सर्वथा अपि द्वितीयायाः प्रतिपत्सम्पृक्तत्वाविशेषेणाविशेषणत्वप्रसङ्गात् पूर्वोक्तानामपि दोषाणां तदवस्थत्वात्। अथ द्विधैव प्रतिपद्युक्तायां शुक्लद्वितीयायां सोमदर्शनादित्युच्यते। तन्न। अनन्तरैकदोषवर्जं पूर्वोक्तदोषाणामन्यथाप्यपरिहारात्।

किञ्च आदित्यवारे षष्टिनाडिकायाममावास्यायां सत्यां प्रतिपदि घटिकाद्वयविवृद्धाय सोमवारं व्याप्य मङ्गलवारे घटिकाद्वयमात्रायां प्रतिपदि सत्यां द्विधैव प्रतिपत्संयुक्ता द्वितीया जातेति तत्र सोमदर्शनाच्चतुर्दश्यामन्वाधानमपकृष्येत। अथ त्रिमुहूर्त्तायां द्वितीयायां सोमदर्शनादित्युच्यते। तन्न नहि कदाचिदपि त्रिमुहूर्त्तैव द्वितीया भवति। यद्यप्यत्यन्तह्रासो भवति तथापि त्रिमुहूर्त्ताधिकह्रासाभावात् सप्तविंशतिमुहूर्त्तन्यूनद्वितीया न कदाचित् सम्भवति। अथ यस्मिन्नहनि त्रिमुहूर्त्तैव द्वितीया तत्र सोमदर्शनादित्युच्यते। तन्न। तृतीयायुक्ता द्वितीया यस्मिन्दिने तत्र सोमदर्शनादपि हि चतुर्दश्यां अन्वाधानापकर्षः प्रसज्यते। अथ प्रतिपद्दिन वर्त्तिन्यां त्रिमुहूर्त्तायां सोमदर्शनादित्युच्यते, तर्हि षण्मुहूर्त्तायां वा प्रतिपदि द्वितीयायामपि चतुर्दश्यामन्वाधानापकर्षो न विधीयेत। अथ न्यूनत्वव्युदासार्थं त्रिमुहूर्त्तग्रहणं नाधिकव्युदासार्थमित्युच्यते, तत्रापि तावदेको दोषः सङ्ख्याशब्दानां न्यूनाधिकनिवर्त्तकस्वभावानां न्यूनमात्रनिवर्त्तकत्वमिति चयमात्रन्यूनत्रिमुहूर्त्तायां

सोमदर्शनाविशेषेऽपि अन्वाधानानपकर्षः प्रसज्येत । अथापराह्णिक्यां द्वितीयायां सोमदर्शनादित्युच्यते। नैतदेवं। न हि कदाचिदपि तिथि: केवलपूर्वाह्णसम्बन्धिनी विद्यत इति, सर्वस्या अपराह्णसम्बन्धिताविशेषेण व्यावृत्त्यभावेन व्यर्थविशेषणत्वप्रसङ्गात्। अथापराह्णभावेन या द्वितीया सैवापराह्णिकी तस्यां सोमदर्शनादित्युच्यते। नैव। अपराह्णमात्रवर्त्तिन्यां द्वितीयायां कदाचिदपि सोमदर्शनाभावेनार्थसम्भवादर्थन्तमुक्तं स्यात्। आपराह्णिक्यां द्वितीयायां सन्ध्यादिवर्त्तिन्यामेव सोमस्य दृश्यमानत्वात्। अथापराह्णिकी द्वितीया यस्मिन्दिने विद्यते तदीयसन्ध्यादिकाले सोमदर्शनादित्युच्यते, तर्हि तदीयसन्ध्यादिबहूनां पदानां अध्याहारः प्रसज्येत। पूर्वोक्तवाक्यान्तरव्यवहितकल्पनादयो दोषा अपि तदवस्था एव। तस्मात् सोमदर्शनदिने यागनिषेधश्रुतीनान्तद्दिने यागविधायकश्रुतीनाञ्च वक्राचार्य्यमतानुसारेण व्यवस्थितविकल्प. पर्वविचारे प्रतिपादितस्तथैवैतदपि वचन नेतव्यं न त्वात्मव्येण। तस्माच्चिरस्तेन चतुर्दश्याममन्वाधानापकर्षविधायकमेतदिति युक्त। तदयुक्त। "यस्मिन्नहनि पुरस्तात्परत' सोमो न दृश्यते तदहर्यजत इति श्रुत्या यागस्य चन्द्रादर्शनदिने विधानात्।

तथाच स्मृति ।

यदहश्च न दृश्येत सम्पूर्णश्च यदा भवेत् ।

स एव कालो यागस्य एतेन हविषा यजेत्॥ इति॥

उपवासोऽपि तस्मात् "यदेवैतन्न पुरस्तान्न पश्चात्पश्येत्तदैवोपवसेदिति वचनेन चन्द्रादर्शनदिने विहितस्तयोरेकवाक्यत्वाविनि चन्द्रदर्शनेऽङ्गगुणविरोधे च तादर्थ्यादिति न्यायेनाङ्गकाल एव

परित्याज्यः, प्रधानविरोधेनाङ्गमपि परित्याज्यं किमङ्गगुणमपि ।

अतएवोपवमेदित्यनुवदत्यापस्तम्बः ।

यदहर्न दृश्यते तदहरमावास्यायां श्वो न द्रष्टार इति येति ।

सम्पूर्णायाममावास्यायां तत्रोपवासः, अन्यस्यां तु पूर्वेद्युरुपवासः, चन्द्रादर्शनदिने याग इत्यर्थः, अन्यथाङ्गकालानुरोधेन प्रधानकालबाधप्रसङ्गात् ।

ननु "यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्त इति चन्द्रदर्शनेऽपि यागं दर्शयति । उच्यते । इयं श्रुतिः चन्द्रोदयदिने यागमाह, न चन्द्रदर्शनदिने । तथापि चन्द्रोदयात् प्रागेव याग इत्याह श्रुतिः, "तदेनमह्नः औषधीभ्यः सम्भृत्याऽऽहुतिभ्योऽधिजमां जनयतीति । उदितञ्च जना न तस्मिन्नहनि पश्यन्ति किन्तु द्वितीय एवेति । अतः खण्डतिथावपि तथैव यष्टव्यं अन्यथा श्रुतिविरोधः । यदपि "स एष आहुतिभ्यो जातः पश्चाद्दृश्ये" इत्यादिश्चास्तादभिप्रायेणैव । अथ वा प्रतिपद्याहुतिभ्योजातः पश्चाद्द्वितीयदिने दृश्य इत्यर्थः, अत एव स्मृतिकाराश्च अचन्द्रदर्शनदिने यागकरणादित्यत आहुः ।

अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति ।

तथा ।

यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।

तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातय इति ॥

तस्माच्चन्द्रदर्शनदिने सर्वथा यागो न कर्त्तव्यः, चन्द्रदर्शने यागनिषेधेनैव प्रतिपच्चतुर्थ्योर्मध्ये निवृत्ते तस्मिन्निषेधो गुरुत्वख्यापनार्थः । एतेन "त्रिमुहूर्ता द्वितीया चेति वाक्यमन्वाधानोत्कर्षविधायकमिति निरस्तं।

किञ्च अन्वाधानोत्कर्षविधाने चतुर्दश्यां सोमदर्शनाच्चतुर्दशीतः परत्र दिने अन्वाधानमिति व्यवहितकल्पनाद्वयं प्रसज्यते भवदुक्तदोषप्रसङ्गाच्च। यदि प्रतिपदापराह्णिकी त्रिमुहूर्त्ता द्वितीया तदा चतुर्दश्यामन्वाधानं कर्त्तव्यं परत प्रतिपदि त्रिमुहूर्त्तद्वितीयायां सोमदर्शनादित्यर्थे स्वीक्रियमाणे अन्वाधानापकर्षविधानेऽपि दोषाभावात्। न ह्यत्र प्रतिपच्छब्दस्य वा द्वितीयाशब्दस्य वा सोमदर्शनादित्यनेन सम्बन्धः येन वाक्यभेद-विपरिणाम-व्यवहितकल्पनाः भवेयुः परतइत्यनेनैव तथाभावात् चतुर्दश्यामन्वाधानं परतः सोमदर्शनादित्युक्ते चतुर्दशीपरतः तिथिग्रहणे प्राप्ते अमावास्यायाः प्रतिपदि चन्द्रदर्शनासम्भवात्तु द्वितीया गृह्यते तथा अपि चतुर्दशीपरत्वात् तदतिक्रमेण तिथ्यन्तरग्रहणे प्रमाणाभावाच्च। न द्वितीयामात्रे सोमदर्शनं चतुर्दश्यामन्वाधाने हेतुस्त्रिमुहूर्त्तग्रहणविरोधात् तस्माच्चतुर्दश्यामन्वाधान, परतस्त्रिमुहूर्त्तद्वितीयाया सोमदर्शनादित्यर्थे स्वीक्रियमाणे दोषाभावात् प्रतीयमानान्वयनिर्वाहादङ्गकालानुरोधेन प्रधानकालबाधाभावाच्चान्वाधानापकर्षविधानमेव युक्त।

किञ्च चन्द्रदर्शनदिने यागे स्वीक्रियमाणे बह्वृचवाक्यविरोधोऽपि प्रसज्येत नारायणीयस्त्वाप्यदिभिष्टात्।

यावत्पूर्वस्य हीनत्वं यावद्यास्तमितोदय'।
औपवस्तस्य यागस्य तावदिदुरिति श्रुते. ॥

यावत्पूर्वस्य पौर्णमासीचन्द्रमसो हीनत्व न भवति तावदौपवस्तं कार्यमित्यर्थ'। यावत्तामाश्याया चन्द्रमसोऽस्तगतस्य प्रतिपद्युदयो न भवति तावद्यागकाल इत्यर्थ.।

पूर्णे शशिन्यौपवस्थं यागश्च समसप्तके ।
पर्वण्यस्तङ्गते कुर्य्यात् यागश्चन्द्रार्कसम्मिते ॥

इति पूर्व्वोक्तएवार्थोऽनेन वाक्येन स्पष्टीक्रियते, पौर्णमास्यां पूर्णे चन्द्रमसि औपवस्थाख्यं मतं कार्य्यं तदन्तरं चन्द्रार्कयोः समसप्तके प्रतिपदि यागः कार्य्यः इत्यर्थः ।

उदितो यदि वा हीनो दृश्यते यदि चन्द्रमाः ।
प्रतिपत्सु न कार्य्यः स्यात् विश्वेदेवाः पराङ्मुखाः ॥

उदितोदर्शप्रतिपदि हीनः पौर्णमासीप्रतिपदि चन्द्रमा दृश्यते तदा यागो न कर्त्तव्यः यतःसर्वे देवास्तत्र पराङ्मुखा भवन्ति ।

तथा ।

पुरा तु सूर्य्यास्तमया द्वितीया यदि दृश्यते ।
यागस्तत्र न दृश्येत विश्वेदेवाः पराङ्मुखाः ॥

अस्यापवादः ।

मिश्रायां प्रथमे भागे दृश्यते पूर्णता तथा ।
तद्वात्ययो दिवा नास्ति तत्र यागः परेऽहनि ॥
रात्रेस्तु प्रथमे भागे न दृश्येत्पूर्णता तथा ।
हीनोदितो दिवा यत्र तत्रेष्टा यागमादिशेत् ॥

अत्र केचिदाहुः प्रतिपदि सोमदर्शने सतीष्टिकरणं वैकल्पिकं द्रष्टव्यं, यदि हि प्रातः प्रतिपत्तृतीयांशे लभ्यमानेऽपि सोमदर्शनेनैव दर्शयाग प्रतिषिध्यते तदा ।

यजमीयेऽह्नि सोमश्चेदाकाशे यदि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्विजातये ॥

इति कात्यायनवचनमसङ्गतार्थमेव स्यात्। "त्रिमुहूर्त्ता द्वितीया चेदित्यनेन चतुर्दशयामव्याधानं विधाय पञ्चदशयामपर्य्यादिचिते यागे कृते द्वितीयेऽहनि प्रतिपदि यजनीयेऽहनि सोमश्चेदित्युच्यमानमसङ्गतं स्यात्। तस्मात्तो यजनीयत्वाभावात्पूर्वाह्णस्य तदा यजनीयत्वात् "तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये" इति यागाभावे व्याहृतिहोमो दण्डदक्षिणादानं विधीयमानमपि आकस्मिकत्वादसङ्गतं,सोमदर्शनेन तु पाक्षिके यागप्रतिषेधेऽभ्युपगम्यमाने चन्द्रदर्शनेऽपि सति यदनेनैव वचनेन व्याहृतिहोम-दण्डदक्षिणादानसहितो यागो विधीयते तदेवमर्थवन्नान्यथा। तदयुक्तं। तथाहि किमयं प्रायश्चित्तविधिर्निमित्तविधिर्वा, आद्येऽपि किं यजनीयदिने चन्द्रदर्शने प्रायश्चित्तं, उत चन्द्रदर्शने प्रायश्चित्तं, उत चन्द्रदर्शनदिने यागे न तावत् प्रथमः कल्पः, यो ह्यज्ञानाच्चन्द्रदर्शनदिने यागं अनुतिष्ठति तस्य पश्चाच्चन्द्रदर्शने प्रायश्चित्तविधायकत्वेनाप्युपपत्तेः श्रौत-स्मार्त्तनिषेधपाक्षिकत्वापादनप्रामर्थ्याभावात्। किञ्च प्रायश्चित्तं विहितनिषिद्धातिक्रमे भवति, तत्र यदि यजनीयदिने चन्द्रदर्शने प्रायश्चित्तमिदं भवेत् तर्हि तन्निषेधकल्पना प्रसज्येत यदि चन्द्रदर्शनदिने यागे इदं विधीयेत। उत चन्द्रदर्शनदिने यागे निमित्ते प्रायश्चित्तं भवेत्तदा तन्निषेधस्य श्रुतत्वाश्च काचित्कल्पनेति तत्रैवेदं प्रायश्चित्तं। नापि द्वितीयः निषेधपाक्षिकत्वाभावप्रसङ्गात्। निमित्तविधित्वेन किं यजनीयदिने चन्द्रदर्शननिमित्तमिदं विधीयते उत चन्द्रदर्शनदिने यागे निमित्ते इति। नोभौ पूर्वोक्तदोषात्। द्वितीयपक्षे यजनीयदिने चन्द्रदर्शननिमित्तत्वप्रतीतिरपि बाध्यते। तस्माच्चन्द्रदर्शनदिनयागनिषेधो न पाक्षिक-

इति। अत्र केचिदाहुः सर्वदा प्रतिपद्येव यागो न द्वितीयाविद्ध-प्रतिपदि यागः, नापि पर्वचतुर्थांशे याग इति।

यदाह कात्यायनः।

पक्षादावेव कुर्वीत सदा पक्षादिकर्म यत्।

पूर्वाह्ण एव कुर्वन्ति विद्धेऽप्यन्ये मनीषिणः। इति॥

अन्ये ग्रहणं विकल्पसूचनार्थं अन्ये न कुर्वन्तीत्यर्थं, यथा वषडि-त्येके समामनन्ति वौषडित्येके इति। तदप्ययुक्तं। पूर्वाह्णसन्धि-निमित्तपूर्वदिनयागविधायकपर्वचतुर्थांशयागविधायकद्वितीयाविद्ध-प्रतिपन्निषेधचन्द्रदर्शनदिनयागनिन्दनिन्दावचनबहुतरश्रौतस्मार्त्त-वचनसङ्कोचप्रसङ्गात् अनेकदोषदुष्टविकल्पप्रसङ्गाच्च। न चात्र विधि-विभक्तिरस्ति, आचारमात्रोपदेशात्। न चेदृशस्य स्पष्टविधिविभक्ति-युक्तबहुतरवाक्यार्थविकल्पापादने सामर्थ्यं, तस्मादेतद्वाक्यममनीषिण-इत्यकारप्रश्लेषेण व्याख्येयं। तस्मादुक्तैव व्यवस्था युक्ता। अत्र बौधा-यनसूत्रनिबन्धकाराः केचिदपराह्णगतेऽपि पर्वसन्धौ पूर्वेद्युरुपोष्य तद-हर्यागानुष्ठानं वदन्ति तच्चापराह्ण एव सन्धिसमीपे यागमिच्छन्ति। तदनुपपन्नं। प्रातर्यजध्वमिति मन्त्रलिङ्गविरोधात्।

ननु प्रातर्यजमानेऽपि सन्धौ यजेतेति विरुध्यते। नैष दोषः। सन्धि-शब्दस्य सामीप्यपरत्वात् सामीप्यस्य चापेक्षिकत्वात्प्रातःकालोऽप्यपे-क्षया समीप इति वक्तुं शक्यत इति न सन्धिशास्त्रविरोधः, अपराह्णस्तु न कथञ्चित् प्रातरिति वक्तुं शक्यत इति अपराह्णयागानुष्ठाने भवति प्रातःकालविरोध इति न तत्र यष्टुं युज्यते। ननु यावत्स-न्निहितसामीप्यं भवति तावत्सन्धिशास्त्रमनुगृहीतं स्यादित्यपराह्णगतसन्धौ

तत्समीप एव यागापेक्षा। हन्त रात्रिगतेऽपि पर्वसन्धौ तत्रैवानुष्ठानं प्राप्यते । अथ पूर्वेद्युरग्निं गृह्णात्युत्तरमहर्देवता यजत इत्यहर्विधानाद्रात्रेस्तु साक्षाद्विधानाभावात् सन्धिसमीपस्य कथञ्चिदहन्यप्युपपत्तेर्न रात्रौ यागानुष्ठानमिति। हन्तापराह्णगतेऽपि सन्धौ तत्र यागेऽनुष्ठीयमाने प्रातर्विधिविरोधादपराह्णस्य साक्षाद्विधानाभावात् सन्धिसामीप्यस्य प्रातरप्युपपत्तेर्नापराह्णे यागानुष्ठानं। अथ सन्धौ यजेतेति प्रत्यक्षविधित्वात् प्रातर्यजध्वमिति मान्त्रवर्णिकोऽस्पष्टविधिर्दुर्बलः। अत्रोत्तरमहर्देवता यजत इत्यपि वर्त्तमानापदेशत्वेनास्पष्टविधित्वात् दुर्बलत्वमविशिष्टं। अथोच्यते। विरोधे सति बलाबलञ्चिन्त्यते रात्रिगतस्य सन्धेरहरपि समीपं भवति इति सन्धिशास्त्रस्य सामीप्यपरस्याहःशास्त्रेणाविरोधः, हन्त तत एव हेतोः प्रातःशास्त्रेणाप्यविरोधः ।

किञ्च सन्धिशास्त्रस्य सामीप्यं न मुख्योऽर्थः, किन्तु लाक्षणिक इति, तथाप्यविशिष्टमस्पष्टत्वं । न च प्रातर्विधेरप्रकरणाधीनत्वं दोषः, अप्रकरणाधीनमपि स्मार्त्तदक्षिणाचारादिकं प्रकरणाधीनाच्छ्रौतात् प्रत्यासत्त्यपेक्षकाङ्गयोगशास्त्राद्बलीय इत्युक्तं शिष्टाकोपाधिकरणे । तस्माच्चोदितदेश-कालाद्यबाधेन यावत्सामीप्यं सम्भवति तावदेव गृह्णाति । अन्यथा सामीप्यलोभेन प्रातःकालबाधे क्रियमाणे सर्वाङ्गान्तरबाधोऽपि प्रसज्यते । तस्मात् सन्धिसमीपवर्त्तिनि पर्वचतुर्थांशादिचोदितकालानुरोधिनि प्रातःकाले यष्टव्यं। ननु "न सायमस्ति देवयागाय जुष्टमिति सायंकाले यागनिषेधादवशिष्टोऽपराह्णादिरभ्यनुज्ञातो गम्यते विशेषनिषेधस्य शेषाभ्यनुज्ञापरत्वात् यथा वामेन

गौतमः ।

नित्यमेके नगरे ।

प्रचेताः ।

चतुष्पथ-महापथेषु राजोद्यानेषु न देवसमीपेऽधीयीत ।

गौतमः ।

श्मशान-ग्राम-महापथान्तेष्विति ।

श्मशाने तु विशेषमाहापस्तम्बः ।

श्मशाने सर्वतः शम्याप्रासादर्वागेषाध्यवसिते संचेण वा नान-ध्यायोऽध्ययमाने तु तस्मिन्नेव देशे नाधीयीत । श्मशानवत् शूद्र-पतितौ समानागार इत्येके । शूद्रायान्तु प्रेक्षण-प्रतिप्रेक्षणयो-रेवानध्यायः । तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने विद्युत्-स्तनयित्नुसमवे ।

न वृक्षस्थो न तीर्थस्थो नाप्सु नौषु सभासु च ।
वह्नसंकीर्णमध्ये च नाधीयीत कदाचन ॥

शङ्खः ।

नाधीयीताभियुक्तोऽपि यानगो न च गोगतः ।
देवायतन-वल्मीक-श्मशान-वनसन्निधौ ॥

मनुः ।

नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनं ।
न नावं न खरं नोष्ट्रं नेरिणस्थोन यानगः ॥
शयान प्रौढपादश्च कृत्वा चैवावसक्थिकां ।
नाधीयीतामिषञ्जग्ध्वा सूतकाद्याद्यमेव च ॥

न विवादे न कलहे न सेनायां न सङ्गरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥

'ईरिण' ऊषर। 'प्रौढपाद' अवसक्थिका-जान्वोर्मध्यस्य च वस्त्रादिना वेष्टन। 'भुक्तमात्रे' यावदार्द्रपाणिरित्यर्थ ।

उदके तु न धर्मार्थ अपनिषेध किं तर्हि अपूर्वग्रहणार्थ, एते त्वादरार्था, नान्येष्वनध्यायेषु मानसाध्ययनमिति कश्चित् । अपरे तु मानसमनिच्छन्ति ।

तथाच बौधायन ।

अन्येषु चाप्रतीत्यानेष्वनध्यायोऽन्यत्र मानसात् ।

'मानस' विजन-मरणयोरनध्याय ।

मनु ।

उदके मध्यरात्रौ च विण्मूत्रे परिवर्जयेत् ।
उच्छिष्ट श्राद्धभुक्तौ च मनसापि न चिन्तयेत् ॥

गौतम ।

ऊर्द्ध भोजनादुत्सवे प्राधीतस्य च उत्सवे उपनयनादूर्द्ध भोजनादहोरात्रमनध्याय ।

'प्राधीतस्य' अध्ययने प्रथम प्रवृत्तस्य, भोजनादूर्द्धमनुत्सवेऽपि पूर्ववदनध्याय ।

स्मृत्यन्तरे ।

प्रोभनारदे प्रोभनदिवसे नानध्याय विवाह-मौञ्जीबन्धन-प्रतिष्ठोद्यापनादिषु सार्जनमपार्टे सपिण्ड सगोत्राणामनध्याय । यच्चे चानुबन्धात् ऋत्विजामाचार्याणाञ्च ।

मनुः ।

पांशुवर्षे दिशां दाहे गोमायुविरुते तथा ।
श्व-खरोष्ट्रे च रुवति पङ्क्तौ च न पठेत् द्विजः ॥

यमः ।

शिवारुत तथा श्रुत्वा सन्ध्ययोर्न द्विजोत्तम ।
नापराह्णे न मध्याह्ने नार्द्धरात्रे कदाचन ॥

शिष्टे च गृहमागते तदनुज्ञावधिरनध्यायः ।

तथाच यमः ।

आगतञ्चातिथिं दृष्ट्वा नाधीयीतैव बुद्धिमान् ।
अभ्यनुज्ञापिते तस्मिन्नध्येय तु प्रयत्नतः ॥

मनुः ।

अतिथिञ्चाननुज्ञाप्य मारुते वाति वायति ।
रुधिरे च स्रुते गात्रात् शस्त्रेण च परिक्षते ॥

ब्राह्मणागमनेऽर्थादीनि दत्त्वाभ्यनुज्ञाप्याधीयीरन् ।

आपस्तम्बः ।

ब्रह्म घोषमाणो नक्तवदामपेक्षन् सम्भाषितुं समतोऽध्येतुम्ब्राह्मणान् सम्भाष्यतया सम्भाषेत सम्भाषित्वा ब्राह्मणेन नैव सम्भाष्याधीयीत, तथा श्रोत्रियाध्याममेऽधिजिगांसमानोऽधीयानोऽनुज्ञाप्याधीयीताध्यापयेद्वा गुरुसन्निधौ चाधीहि भो इत्युक्तोऽधीयीताध्यापयेद्वोभयतः उपसङ्ग्रहणमधिजिगांसमानस्याधीत्य चाधीयानेषु वा यथान्योऽप्यपेयादेतमेव शब्दमुत्सृज्याधीयीत ।

तथानृतावभ्रदर्शनेऽप्यनध्यायमाह ।

गौतमः ।

अभ्रदर्शने चापर्त्ताविति ।

'अभ्रं' जलधरोमेघः ।

यमः ।

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।

कदाचिदपि नाध्येयं कोविदार-कपित्थयोः ॥

यत्तु मनुनोक्तं ।

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।

स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं द्विज' ॥ इति ।

तद्ब्रह्मयज्ञाध्ययनविषयं ।

तथाच ब्रह्मयज्ञं प्रकृत्य तैत्तरीयका' समामनन्ति ।

तस्य वा एतस्य ब्रह्मयज्ञस्य द्वावनध्यायो यदात्माऽशुचिर्यद्देश-इति ।

अतएव मनुरपि ।

वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके ।

नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

'वेदोपकरणानि' अङ्गानि, 'नित्यस्वाध्याय' ब्रह्मयज्ञसम्बन्धी, होममन्त्रग्रहणं बलियज्ञादिमन्त्राणामप्युपलक्षणं ।

नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रन्तु तत् स्मृत ।

ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृत ।

अपूर्वग्रहणार्थे त्वनध्यायो न तु कर्मणि ॥

प्रयोगपारिजातेऽपि ।

नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च ।
नानध्यायोभवेदेव ग्रहणे चाह यो स्मृतः[१] ॥ इति ।

पुराणात् ।

शिष्योऽध्ययनञ्च कुर्व्वन्ननध्यायान् विवर्जयेत् ।
अध्यापनञ्चापि कुर्व्वन् अनध्यायान् विवर्जयेत् ॥

मनु ।

इमान्नित्यमनध्यायानधीयानो विवर्जयेत् ।
अध्यापनञ्च कुर्व्वाण शिष्याणां विधिपूर्व्वकं ॥

तथा ।

प्रणवव्याहृतीनाञ्च सावित्र्याः शिरस सदा ।
नित्ये नैमित्तिके कार्य्ये व्रते यज्ञे क्रतौ तथा ॥
प्रक्रान्ते कामकार्य्ये च नानध्यायाः स्मृतास्तथा ।
देवतार्च्चनमन्त्राणां नानध्याय स्मृतस्तथा ॥

तथा ।

चतुर्दश्यष्टमी-पर्व्व-प्रतिपत्स्वेव सर्व्वदा ।
दुर्मेधसामनध्यायस्त्वन्तारा गमनेषु च ।
तत्र विस्मृतिशीलानां वज्रवेदप्रपाठिनां ॥
चतुर्दश्यष्टमी-पर्व्व-प्रतिपद्दर्जितेषु च ।
वेदाङ्ग-न्याय-मीमांसा-धर्म्मशास्त्राणि चाभ्यसेत् ॥

गोतम ।

प्रतिविद्य चावश्यमामनन्ति तथा चतुष्पथे भोजनोत्तरकाल

(१) "ग्रहणे चाह यो स्मृतः" इत्यय पाठ न समीचीनो विभाति ।

छन्दोगानामनध्यायः, तथाच प्राग्भोजनीयात् प्रादाद्धीयारण्यगेयानि ।

आपस्तम्ब ।

यथोक्तमन्यदतःपरिषत्स्वपि ।

इति श्रीमहाराजाधिराज श्रीमहादेवीयसमस्तकरणाधीश्वरसकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये अनध्यायकालनिर्णयः ।

---

## अथ केशान्तकर्मकालः।

तत्र याज्ञवल्क्य ।

केशान्तश्चैव षोडशे ।

'केशान्त' गोदानाख्यं कर्म, एतच्च ब्राह्मणविषयं ।

यदाह मनु ।

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके तत ॥

ज्योतिःशास्त्रे ।

यान्युक्तानि चौरेषु भानि तान्येव चूडाकरणे ।
उपनयने गोदाने केशान्ते च शस्तानि ॥

इति केशान्तकर्मकाल ।

---

## अथ ब्रह्मचर्य्यकालविधिः।

तत्रापस्तम्ब ।

उपेतस्याचार्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वर्षाणि पादोनमर्द्धेन त्रिभिर्वा द्वादशावरार्द्धं न ब्रह्मचारिणोवरोपवासोऽस्ति । त्रिभि पादैरून द्वादशवर्षाणीत्यर्थं, एतच्चाशक्तविषयं ।

यदाह देवल ।

अत परमष्टाचत्वारिंशद्वार्षिकी वेदव्रतचर्यामातिष्ठेत अशक्तश्चेत् षट्त्रिंशद्वार्षिकी चतुर्विंशतिवार्षिकी चेति ।

एतत्त्रिवेदविषयं ।

यदाह यम ।

षट्त्रिंशद्द्वादशवर्षाणि चतुर्विंशतिमेव वा ।

षट्‌त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत् ॥

बौधायनोऽपि ।

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्य्यमाचरेत्, चतुर्विंशति द्वादश वा प्रतिवेदं संवत्सरार्द्धं वा प्रतिग्रहणाद्वा जीवितस्यास्थिरत्वात् कृष्णकेशोऽग्नीनादधीतेति श्रुतेः ।

पैठीनसिः ।

द्वादशवर्षाण्येकवेदे ब्रह्मचर्य्यञ्चरेत् प्रतिद्वादशं वा सर्वेषु ग्रहणान्तं वा ।

शङ्ख-लिखितौ ।

द्वादश द्वादशवर्षाणि वा प्रतिवेदं यावद्ग्रहणं वा वेदस्य तावत् ब्रह्मचर्य्यमाचरेत् ।

मनुः ।

षट्‌त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतं ।
तदर्द्धं पादिकं वापि ग्रहणान्तिकमेव वा ॥

अस्यार्थः ।

त्रैविद्या ऋग्यजुःसामाख्यवेदत्रयविषयं, तत् षट्‌त्रिंशदाब्दिकं कार्य्यमेव प्रतिवेदं द्वादशवर्षाणि ब्रह्मचर्य्यमित्युक्तं भवति, अर्द्धिकपक्षे प्रतिवेदं षड्वर्षाणि, पादिकपक्षे तु त्रीण्येव ।

याज्ञवल्क्यः ।

प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके ।

इति ब्रह्मचर्य्यकालनिर्णयः ।

## अथ समावर्त्तनकालः ।

तत्र दक्षः ।

स्वीकरोति यदा वेदं चरेद्वेदव्रतानि च ।

ब्रह्मचारी भवेत्तावत्तत पश्चाद्गृही भवेत् ॥

वेदस्वीकरणं वेदार्थविचारस्याप्युपलक्षणं ।

तथाच स्मृत्यन्तरे ।

वेदमधीत्य च्छन्दोविषयानर्थान् बुद्धा स्नायात् ।

तथाच व्यासः ।

न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुः ।

पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥

यथा पशुर्भारहारी न तस्य लभते फलं ।

द्विजस्तदर्थानभिज्ञो न वेदफलमश्नुते ॥

वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् ।

अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥

योऽधीत्य वेदविद्विप्रो वेदार्थं न विचारयेत् ।

स सान्वयः पशुसमः(१) पात्रतां न प्रपद्यते ॥

अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः ।

स ब्रह्मलोकमाप्नोति ब्रह्मानुष्ठानसिद्धितः ।

श्रुतहीनधनः सोऽपि यत्नेनामुत्र तद्वयेत् ॥

तथा ।

ज्ञानं कर्म च संयुक्तं श्रद्धया कल्पितं यथा ।

---

(१) शूद्रसम इति ख० ।

अधीतं श्रुतसंयुक्तं तथा श्रेष्ठं न केवलं ॥
पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्जितान् ।
पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्च्चयेत् ॥
ऋक्पादमप्यधीत्यान्तन्न्यायतस्तु तदर्थवित् ।
सम्यग्व्रतानि संसेव्य समावर्त्तनमर्हति ॥

एतत्समर्थविषयं एकैकसमाप्तावपि स्नानविधानात् ।

तत्र हारीतः ।

त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्या-व्रतस्नातकश्चेति ।

यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः, यस्तु समाप्य व्रतानि असमाप्य वेदं स व्रतस्नातकः, यः पुनरुभयं समाप्य स विद्या-व्रतस्नातकः ।

याज्ञवल्क्यः ।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

आपस्तम्बेयाम्नायोक्ते(१) तथा व्रतेनाष्टाचत्वारिंशत्परिमाणेन विद्याव्रतेन चेत्येके, आधानाद्युपरिज्ञानाच्छचित्रवणमुदकमुपस्पृश्य-नग्निपक्वटद्भिरस्नायोगस्नानापत्तिकः संवत्सरमेतद्व्रतञ्चरेत् एतदष्ट-चत्वारिंशत्सम्मितमित्याचक्षते ।

व्यासः ।

गुरुशुश्रूषया विद्यां समाप्य विधिवद् द्विजः ।

(१) पाठोऽयं न समीचीनो विभाति ।

स्नायीत तदनुज्ञातो दत्त्वास्मै दक्षिणां द्विजः ॥

गौतमः ।

विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृतानुज्ञातस्य स्नानमिति ।

विद्यान्ते गुरुरर्थेन हेतुना 'निमन्त्र्यः' प्रष्टव्यः, कोऽर्थस्तुभ्यन्दातव्यः इति पृष्टः स खलु यं ब्रूयात्तमर्थमाचार्याय दत्त्वा स्नायादशक्तौ तद-नुज्ञया वेत्यर्थः ।

बुधोऽपि ।

गुरुणानुज्ञातः स्नायादिति ।

इति समावर्त्तनकालः ।

---

## अथाश्रमकालनिर्णयः ।

तत्र ।

चतुर्णामाश्रमाणां समुच्चयो विकल्पश्च तत्र समुच्चयं प्रकृत्य मनुराह ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ।

एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥

सर्व्वेऽपि क्रमशस्त्वेते यथाशास्त्रनिषेविताः ।

यथोक्तकारिणं विप्रं नयन्ति परमाङ्गतिं ॥

'गृहस्थप्रभवाः' तदुपजीविनः। 'क्रमश' इति प्रातिलोम्यं निषिद्धं ।

तथाच दक्षः ।

यथाणामानुलोम्यन्तु प्रातिलोम्यञ्च विद्यते ।

प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः ॥

यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ।

न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥

तेन मृतभार्य्येण पुनर्विवाहासामर्थ्येऽपि न ब्रह्मचारिणा भाव्यं, तत्र च ब्रह्मचारि-गृहाश्रमशब्दावुत्तरोत्तराश्रमिणः पूर्व्वपूर्व्वाश्रमानाश्रयणप्रतिपादनपरौ, अन्यथा "प्रातिलोम्यं न विद्यते" इति ग्रहणमविवक्षितं स्यात्।

कूर्म्मपुराणे।

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा।

क्रमेणैवाश्रमा प्रोक्ताः कारणादन्यथा भवेत् ॥

वानप्रस्थाश्रमङ्गत्वा न गृहं प्रविशेत्पुनः।

न सन्यासी वने वाप्य ब्रह्मचर्य्याय साधकः ॥

पुराणात्।

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः।

अप्रमत्तो द्विजातेन मार्गाः पुत्र कुर्व्वता ॥

आपस्तम्ब।

चत्वार आश्रमा गार्हस्थमाचार्य्यकुलवासः सन्यासोवानप्रस्थमिति। तेषु सर्व्वेषु यथोपदेशमव्यग्रोवर्त्तमान आश्रमं गच्छति, तेषु सर्व्वेषु वर्त्तमान इति समुच्चयोदर्शितः।

जावालश्रुतिश्च चतुर्णां त्रयाणां द्वयोर्व्वा समुच्चय इत्याह।

ब्रह्मचर्य्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति।

समुच्चये कालविशेषाकाङ्क्षायामाह मनुः।

चतुर्थमायुषोभागमुषित्वाद्यङ्गुरौ द्विजः।

द्वितीयमायुषोभागं कृतदारोवसेद्‌गृहे ॥
वनेषु च विहृत्यैव तृतीयं भागमायुषः।
चतुर्थमायुषोभागं त्यक्त्वा सङ्गान् परिव्रजेत् ॥

"शतायुर्वै पुरुष इति श्रुत्याभिहितमायुषश्चतुर्थोभागः पञ्चविंशतिवर्षाणि।

गौतमस्तु विकल्पमाह।

तस्याश्रमविकल्पमेके ब्रुवते।

अयन्तु विकल्पोमतचर्य्याश्रमव्यतिरिक्तविषयः।

वसिष्ठः।

चत्वार आश्रमा ब्रह्मचारी गृहस्थोवानप्रस्थः परिव्राजकस्तेषां वेदमधीत्य वेदौ वेदान् वा विशीर्णब्रह्मचर्य्यमिच्छेत्तमाविशेत्।

वेदान् वेदौ वेति पक्षौ फलभूयस्त्वमभिप्रेत्य, वेदमधीत्याविप्लुतब्रह्मचर्य्यस्तेषामाश्रमाणां मध्ये यमिच्छेत्तं 'आविशेत्' आश्रयेत्तत्रैव निष्ठां यायादित्यर्थः।

वामनपुराणे।

गार्हस्थ्यमिच्छन् भूपाल कुर्य्याद्दारपरिग्रहम्।
ब्रह्मचर्य्येण वा कालं नयेत्सङ्कल्पपूर्व्वकम् ॥
वैखानसोवापि भवेत्परिव्राडथ वेच्छया।
गुरवे तु वरं दत्त्वा स्नायाद्‌गुरुवर्नुमोदितः।
गृहं वन वोपवसेद्व्रजेदापि द्विजोत्तमः ॥

उशना।

आचार्य्याभ्यनुज्ञातस्यानुपूर्व्वमेकमाश्रम।

आ विमोकाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥
अयञ्च विकल्पः समुच्चयानुष्ठानरहितानां वेदितव्यः ।
इत्याश्रमकालनिर्णयः ।

## अथोद्वाहविकल्पः ।

तत्र बृहस्पतिः ।

वेदानधीत्य विधिना समावृत्तोऽनुतव्रतः ।
समानामुद्वहेत्पत्नीं यशः-शील-वयो-गुणैः ॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥
गुरुं वा समनुज्ञाप्य प्रदाय गुरुदक्षिणां ।
सदृशानाहरेद्दारान् मातापितृमते स्थितः ॥
वेदं वेदौ च वेदान् वा ततोऽधीत्य यथाविधि ।
अविशीर्णब्रह्मचर्यो दारान् कुर्वीत धर्मतः ॥

अत्र नैष्ठिकानन्तरं शङ्ख-लिखितौ ।

अथानुज्ञातो गुरुणाऽनुपनयनं कृत्वा सवर्णां परिणीय ब्राह्मादिनोद्वाहेन ।

दक्षः ।

स्वीकरोति यदा वेदांश्चरेद्वेदव्रतानि च ।
ब्रह्मचारी भवेत्तावदूर्द्ध्वं स्नातो गृही भवेत् ॥
अनधीत्य द्विजोवेदान् स्नात्वोद्वाह्य यथा तथा ।
अधीते ब्रह्मचर्येण मासि वेदं गुरोर्गृहे ॥

युग्मोऽब्दे सम्पदा विद्या-धर्म-कामायुषां सदा ।
भर्त्तुरिष्टाभवत्योजे वर्षे कन्या स्वसंशयम् ॥
माघमासे भवेदूढा कन्या सौभाग्यसंयुता ।
फाल्गुनोढ़ा भवेत्साध्वी वैशाखे पुत्रिणी भवेत् ॥
धर्मयुक्ता भवेज्ज्यैष्ठे धनिनी कार्त्तिके भवेत् ।
देवपूजारता नित्यं मार्गे स्यात् सोमदैवते ॥
उक्तवर्ज्जितेष्वन्येषु मासेषु प्राप्नुयाद्यदि ।
विवाह कन्यका सा स्यात् सुत-शीलार्थवर्जिता ॥
सितपक्षे तु यस्तस्या प्रकाशयति सा कुलम् ।
कन्योढा त्वसितार्द्धे च अशेषे चेन्निदर्शना[१] ॥

तथा ।

शुक्लपक्षं प्रशंसन्ति विशेषेणोत्तरायणं ।

वशिष्ठः ।

आपूर्य्यमाणपक्षे तु विवाहो ब्राह्मणस्य तु ।
इतरेषां तु वर्णानां कृष्णपक्षे विधीयते ॥

व्यास ।

उपासनोपरिक्तासु तिथिषु स्यादमर्द्दिता ।
दुर्भगा चेति शेषासु सुत-सौभाग्यसंयुता ॥

तथा ।

कल्याणभाविता प्रीतिः सौभाग्यं धनसञ्चयः ।

---

(१) पाठोऽयं स्वादर्शसम्मतोमुद्रित परन्त्वयं न समीचीन ।

सुखार्थौ पञ्चविंशानि शील-सौख्यप्रकीर्त्तयः ॥
शोकामयौ मुदः सौख्यं भाग्यसेवात्मजादयः ।
उपद्रवाः पूर्णफलं प्रोक्तं प्रतिपदादयः ॥

तथा ।

गुरु-शुक्रेन्दुपुत्राणां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्त्तुश्चित्तानुसारिणी ॥
अर्क-तत्पुत्र-भौमानां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ॥
अष्टवर्गगतोऽनिष्टस्थानप्राप्तोऽशुभग्रहः ।
यदा तदा तद्दिवसे विवाहो न प्रशस्यते ॥
यद्यस्य दिवसे प्रोक्तं ग्रहस्य सदसत्फलं ।
तदशेष तदीयायां होरायामपि निर्दिशेत् ॥
प्रशस्ता जन्मताराश्च केचिदाहुस्तथापरे ।
द्वितार जन्मनक्षत्रे त्यक्ता द्वेषां[1] फलप्रदं ॥
अर्कादीनां दिने युक्तं यत्फलं तद्दिनाग्रगे ।
तद्वर्गेऽपि भवेत्कालं होरायान्तु विशेषतः ॥
आदित्याद्यन्यवारेण चतोरर्कायनस्य च ।
सप्तहोऽधिपतिस्तस्य वदन्तीति महर्षयः ॥
दिवसे फलमेतेषां ग्रहणे यदिहोदित ।
तस्मात्सर्वयनाब्देषु सदेवाविकलं भवेत् ॥

(१). त्यक्ता द्वेषां इत्यय पाठो न समीचीन ।

तिर्यक्पञ्चोर्द्ध्वगाः पञ्च रेखे द्वे द्वे च कोणगे।
शङ्कुरेखादिभिर्न्यस्य भानि तत्र प्रदक्षिणं॥
कृत्तिकादीनि यत्रस्मिन्नेकराशिस्थितं यदं।
नक्षत्रमनुना विद्धं विवाहे स्यादशोभनं॥

तथा।

मैत्रं पित्र्यं तथा वैश्वं ब्रह्म-नैर्ऋतदैवतं।
अहिर्बुध्नार्यमा वापि पौष्ण-धातृ-निशाकराः॥

तथा।

आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च।
षड्भागशेषेष्वन्येषु नक्षत्रेषु न शस्यते।
रेवत्यर्द्धचतुर्भागे विवाहः प्राणनाशनः।
स्वाम्यन्तेषु त्रिषु सदा पाणिग्रहणमिष्यते॥

तथा।

हस्तोत्तराणि वायव्यं मैत्रमूले च रेवती।
रोहिणी सौम्य-मैत्रञ्च शुभं पाणिग्रहे सदा॥
ग्रहैर्विद्धं यत्राक्रान्तोपातायनं तथा।
उत्पातदूषितञ्चैव वैधृतिञ्च विशेषतः॥

शातृष्य।

साविश्वानिलमघुकान् मुहूर्त्तानपि निर्द्दिशेत्।
समानदैवतैस्तुल्यं नक्षत्रे. फलमादिशेत्॥
मुहूर्त्तेष्वभिजिदंशे शङ्कहे कालचिन्तक।
अष्टमो दिवसस्यैव योऽभिजित्संज्ञितः क्षण.॥

स ब्रह्मणा वरो नित्यं सर्वकालः शुभप्रदः।
उपग्रहोद्‌यायैश्च पापैस्तैर्न हि बध्यते॥

तथा।

वैवाहिकर्क्षदैवत्यमुहूर्त्तेष्वपि जायते।
पाणिग्रहः कुमारीणामभीष्टार्थफलप्रदः॥

वैधव्यं दिनबान्धवस्य जगतीसूनोरपत्यच्युतिः
सौम्यस्यार्थपरिच्युतिः सुरगुरोर्दास्यं तथा दुःखिता
श्रामण्यं भृगुनन्दिनः स्तुतिरपि त्यागश्च सौरेः पुन-
र्नारीणां गणिकात्वमेव तमसः केतोश्च वैधाद्‌वधः॥

सारावल्यां।

सर्वेऽप्यनुकूलाः शशि-सूर्यौ नैव गोचरविशुद्धौ।
अप्यूढा प्रकधूर्य्यमस्य धनदस्य वा कुलटा॥

रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ।
वर्जयेत्सर्वकर्माणि व्रत-स्वस्त्ययनानि च॥

गुरौ न जन्माष्टमगे विवाहः
शनैश्चरे जन्मगते तथैव।
न चाष्टमे शीतकरे च कुर्याद्-
रवौ वराधैधनगे प्रयत्नात्॥

ग्रहणदयमध्यस्य ग्रहणादौ त्रिरात्रमपि त्यज।
यात्रा-विवाहसमयं मनसापि न चिन्तयेत् प्राज्ञः॥
मतचन्द्र द्विजातीनां उद्वाहं सुन्दरीषु च।
गुरावस्तमिते नित्यं न कुर्य्याद्भार्गवे तथा॥

विवाहमपि नेच्छन्ति मुनय काश्यपादय ।
यथा पौषे तथा चैत्रे केचिदिच्छन्ति सूरयः ।
तथा सिंहगते जीवे विवाहे बादरायण ॥

वसिष्ठ ।

विवाहे व्रतबन्धे च याचाया व्रतकर्मणि ।
गुरावस्तमिते शुक्रे जातस्य परिणीयते ॥
गुरुर्नष्ट पति हन्याच्छुक्रोनष्टस्तु कन्यका ।
चन्द्रे नष्ट उभौ हन्ति विवाहे तौ विवर्जयेत् ॥
पश्चादभ्युदितोबालो दशाह प्राग्दिनचय ।
पच वृद्धस्तु पूर्वेण पश्चाद्ध पश्चिमे सित' ॥
विचित्तमुपयाति नाशमथ-प्रतापौ दक्षिणे लयने ।

वराह ।

देशाचारस्तावदादौ विचिन्त्यो-
देशे देशे या स्थिति सैव कार्या ।
लोके दुष्ट पण्डिता वर्जयन्ति
दैवज्ञोऽतोलोकमार्गेण यायात् ॥
एकहस्तौ शोभनगोचरस्थे
विवाहमिच्छन्ति हि दाक्षिणात्या ।
रवौ शुभस्थे च वदन्ति गौड़'
न गोचरोमालवके प्रमाण ॥
गौडा दृष्टेवण प्राड्दाक्षिणात्या गुरौर्वल ।
मालवा लग्नमिच्छन्ति लाटाना स्थानसम्बलं ॥

ताराबलं मागधीयाः श्रयन्ति
कुर्वन्ति तारेन्दुबलेन माद्राः ।
तथोत्तरागौकुलसन्निकृष्टाः
माण्डव्य-तित्तीर-तुषारकेषु ॥
यदृर्च-योगास्तिथि-वार-योगाः
शुभाशुभा ये कथिताः प्रभूताः ।
वङ्गेषु तन्मोकफला भवन्ति
नान्येषु देशेषु विचिन्तनीयाः ॥

साराबल्यां ।

षष्ठोविलग्नाद्रविरष्टमो वा
भागो मुहूर्त्ता यदि युज्यते च ।
सूर्येन्दु-ताराबलसम्प्रयुक्ता
गोधूलिका सर्वफलप्रदात्री ॥
लग्नशुद्धिर्यदा न स्याद्यौवनन्तु प्रशस्यते ।
तदा तु सर्ववर्णानां कालोगोधूलिकः स्मृतः ॥
रात्रिर्न ज्ञायते यस्य नापि लग्नस्य निश्चयः ।
लग्ने सूर्यांबली यस्मिन् नच सर्वं प्रशस्यते ॥
सौरस्त्रैकबलोज्ञेयो माहेयोद्विबलः स्मृतः ।
त्रिबलस्तु बुधोज्ञेयश्चतुर्गुणबलोगुरुः ॥
शुक्रः पञ्चबलोज्ञेयश्चन्द्रः षड्बल उच्यते ।
सर्वग्रहबलैर्नित्यं तुल्य एवं दिवाकरः ॥
यात्रा विवाहकालेषु कार्येषु विविधेषु च ।

यत्र सूर्यबलं नास्ति नास्ति सर्वं ततोबलं ॥
पुंसामर्कं स्मृतो योनिर्योषितामम्बुतद्युति ।
अतोनृ-योषितोराशं बलं चन्द्र-शशाङ्कज ॥
यत्र चन्द्रश्च तारा च द्वावेतौ बलवत्तरौ ।
दोषाश्चाच प्रक्षीयन्ते यदि स्युः सर्वतोऽपगा ॥
नष्टे शुक्रे तथा चन्द्रे गुरावस्तमुपागते ।
न विवाहो न यात्रा वै नैव दानं समाचरेत् ॥
द्वादश-दशम-चतुर्थे जन्मनि षष्ठाष्टमे तृतीये च ।
प्राप्ता पाणिग्रहणं जीवे वैधव्यमाप्नोति ॥
सिंहे च भगदैवत्ये गुरौ पुत्त्रवती भवेत ।
अत्यन्तसुभगा साध्वी धन-धान्य-पतिप्रिया ॥

वात्स्यायन ।

पञ्च तिथि-क्षण-करणं लग्नेन्दर्के लग्न-ताराभ्यं ।
पाणिग्रहणे योज्याश्चत्तविदैकादशपदार्थाः ॥
विवाहकर्म नेच्छन्ति प्रसुप्ते शार्ङ्गधन्वनि ।
एतावच्च गतानान्तु माण्डव्याद्या महर्षयः ॥
सिंहस्थिते सुरगुरावधिमासके च
ज्येष्ठे तथाद्यतनुजस्य तथा सुतायाः ।
कुर्वीत नार्क-गुरुनीचगयोर्विलग्न-
जन्मक्षयोश्च निखिलान्यपि मङ्गलानि ॥
रविणा चन्द्रयुक्तेन नारी वैधव्यमाप्नुयात् ।
भौमेन म्रियते घोरैः शुक्रे पापं समाचरेत् ॥

रहस्यनिपुणा सौम्ये त्वप्रगल्भा रतिप्रिया ।
पतिमन्यं भजेत् क्षिप्रं केतुसन्दर्शनाश्रिते ॥
गुरुचन्द्रस्य जामित्रे तिष्ठेद्यदि बलान्वितः ।
धन-सौभाग्य-पुत्रांश्च लभते नात्र संशयः ॥
मणि-मुक्ता-प्रवालैश्च सुवर्णाभरणैः शुभैः ।
शोभतेऽनुमता प्रिया गुरुणा यदि वीक्ष्यते ॥
सा तु भर्त्तुः प्रिया नित्यं बुधे चन्द्रेऽथ सप्तमे ।
आदित्येन तु वैधव्यं महादारिद्र्यमेव च ॥
दृष्टे चन्द्रे च भौमे च न कुर्य्याद् पाणिग्रहणम्[१] ।
बन्ध्या वा मृतवत्सा वा शनैश्चरनिरीक्षिते ॥

वसिष्ठः ।

मरणं साध्वसतीत्वं दास्यं दौःशील्यमेव च ।
चन्द्रयोगे ग्रहाः कुर्य्यू रवि-रक्तार्कि-भार्गवाः ॥
नैपुण्यं कुलपूज्यत्वं पौरुष्यं व्याधिमेव च ।
बुध-जीवसुताः कुर्युः कर्त्तुश्चैव यथाक्रमात् ॥
द्वाभ्यां त्रिभिश्चतुर्भिर्वा दारुणैः सहितः पुनः ।
दारिद्र्यं मरणं वापि कन्यायाः कुरुते ध्रुवं ॥
भजत्यन्यजने नारी गैरिकाम्बरभूषिता ।
विदेशं वा भजेद्वा च सौम्यैश्चैव युतः शशी ॥
सप्तानां मिथुनः श्रेष्ठस्ततः कन्या ततस्तुला ।
तथा मेषविलग्नाद्यु विवाहे सफलाः स्मृताः ॥

(१) न कुर्य्यादाभिषाचनमिति क० ।

अन्ये द्विचतुरादीनामंशा ग्राह्या मनीषिभिः ।
युग्म-कन्या-तुलायान्तु न स्वांशो न परांशकः ॥
सुहृदः सौम्यषड्वर्गाः शुभसौम्यनिरीक्षितः ।
यो वा विवाहकालेषु प्रवेशे शुभकर्म्मणि ॥
आग्नेय कुरुते जारं शुक्र-जीवसमागमे ।
जीव-भास्करयोः ख्यातं मनस्थं कुरुते पतिं ॥
देवेश-सौम्ययोर्योगे त्यक्त्वा बन्धून् पतिं तथा ।
करोति तस्करं जारं कन्या नैवात्र संशयः ॥
विलग्नांशः स्वनाथेन यद्युद्वाहे न दृश्यते ।
पुंविनाशस्ततोऽन्यांशे यद्येवं योषितस्ततः ॥
दशम-तृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रञ्च ।
पश्यन्ति पाददृद्ध्या फलानि चैव प्रयच्छन्ति ॥

व्यासः ।

मेषाद्या ये मया पूर्वमुक्ता द्वादश राशयः ।
तेषां कन्या तुला चैव मिथुनश्च प्रदृश्यते ॥
कन्या-तुलासु मेषेषु शुभेष्वप्यंशके न तु ।
अतोऽंशके फलं कृत्स्नं वदतो मे निशामय ॥
तेषां कर्कोटकन्यान्यकुमारगतमानसा ।
स्तना वृषभगे भाग युग्मांशे शीलसंयुता ॥
वेश्या कुलीरभागे स्यात् सौभाग्या तथैव च ।
सत्यप्रसक्ता सिंहांशे पितृवेश्मरता सदा ॥
रूप-शील-गुणोपेता कन्यांशे स्यात् कुमारिका ।

कृशान्विता तुलस्यांशे दुःशीला मलदूषिता ॥
वेश्या कुलसुखीयस्ते हश्चिकांशेऽतिकोपना ।
चतुर्थवर्गे कुलटा मृग-कुम्भ-झषांशके ।
सुदुष्टा ह्यन्यसक्ता स्यात् कन्या नास्त्यत्र संशयः ॥

गर्गः ।

अधिमासक्षतात्दोषानृतुपञ्चायनोद्भवान् ।
मुहूर्त्त-करणोपेतांस्तिथ्युत्पातभवांश्च यान् ॥
ग्रहदृष्टिं दुराधर्षा द्रेक्काणांशकराशिजान् ।
गुरु-शुक्रबुधाघ्नन्ति लग्ने सम्यग्व्यवस्थिताः ॥

आचार्यः ।

लग्नराशियुक्तो जामित्रगतश्च वर्जितोऽराङ्कः ।
लग्नस्थे वैधव्यं जामित्रगते च कन्यकामरणम् ॥
राशियुक्ते मनस्यापा न चिन्तये सदा वर्ज्ये ।
प्रालग्ने मृत्युं स्याद्धनहानिर्द्वितीयगे ॥
दुश्चिक्येऽर्थविहद्धिः स्याद्बन्धुनाशश्चतुर्थगे ।
सुतनाशः सुतस्थे स्याद्वैरवृद्धिस्तथारिगे ॥
जामित्रस्थे च वैधव्यं आयुर्वृद्धिस्तथाष्टमे ।
धर्मगे धनहानिः स्यात् कर्मगेऽर्के विशीलता ॥
लाभः स्यादायगे भानौ व्ययोदादूव्यगे भवेत् ।
चन्द्रे छ्यप्रिया लग्ने द्वितीये धनिनी भवेत् ॥
तृतीये सुभगा साध्वी चतुर्थे बन्धुप्रिया भवेत् ।
सुतस्थे कन्यका माता षष्ठस्थे मृत्युमाप्नुयात् ॥

जायास्थे सप्तपत्नी स्याद्भर्त्तुर्मृत्युमवाप्नुयात् ।
कन्या प्रजावती धर्मे विकारस्त्वारकर्मणि ॥
भर्त्तृप्रियोपयुक्ता च शशिन्येकादशस्थिते ।
वर्गाणी द्वादशे च स्यात् कन्यका शीलदा शनौ ॥
अनिष्टग्रहण याती प्रशस्तफलद् शशी ।
सौम्यांशकस्थो मैत्रेण दृश्यते चेद्बलीयसा ॥
वैधव्य लग्नगे भौमे कन्यका मृत्युमाप्नुयात् ।
अग्नि चौरभयार्त्ता स्यात् द्वितीयस्थे धरासुते ॥
तृतीयस्थेऽर्थसम्पन्ना बन्धुदृष्टा चतुर्थगे ।
पुत्रहीना सुतस्थे स्यादरिगे सुतभागिनी ॥
सप्तमस्थे महीपुत्रे पुंश्चली खलसंयुता ।
अष्टकस्थाव धरासूनौ पुत्रस्थे कन्यकाप्नुयात् ॥
नवमे भर्त्तृविद्विष्टा दशमे कुहकप्रिया ।
धनान्विता तथायस्थे नष्टार्था व्ययगे भवेत् ॥
लग्नस्थे चन्द्रपुत्रे स्याद्धर्मज्ञा सुप्रजा स्थिरा[1] ।
स्वकुटुम्बरता नित्य धनस्थे सोमनन्दने ॥
श्वश्रू-श्वशुरयोः पूजा तृतीयस्थे शशाङ्कजे ।
चतुर्थे बन्धुपूजा स्यात्सुभगा धनसंयुता ॥
बहुपुत्रा सुतस्थे स्याद्धतशत्रुस्तथाऽरिगे ।
कष्टामापदमाप्नोति पुत्रहानिं तथैव च ॥
सप्तमस्थेऽष्टमस्थे च रोगार्त्ता दुःखभागिनी ।

---

(१) स्थितेति ख० ।

तपोरता धर्मगे स्यान्मायाशीला च कर्मगा ॥
सुत-सत्य-धवोपेता भौमे द्वादशगे भवेत् ।
कन्या सद्भयसंयुक्ता शशाङ्कतनये सदा ॥
गुरौ लग्नगते कन्या धर्मशीला बहुप्रजा ।
सुदीर्घमायुराप्नोति निधन निधने भवेत् ॥
अतिप्रमुदिता जीवे वृश्चिकस्थे भवेत्सदा ।
सबन्धुवृद्धिं जानीयात् सर्वकामगुणान्विताम् ॥
सुशीलाख्या चतुर्थस्थे पञ्चमस्थे बहुप्रजा ।
सपत्नीयुक्ता षष्ठस्थे बहुमूला स्ववेश्मनि ॥
विरूपा दुर्भगा स्वार्था व्यनक्ति विमल यश ।
सुतकर्मसु संसिद्धिं प्राप्नोति दशमे गुरौ ॥
विचित्रमाल्याभरणा मुक्तयुक्ता च कन्यका ।
सुवर्ण-मणि-वस्त्राढ्या भवत्येकादशे गुरौ ॥
व्ययस्थे सततोदारा ददात्यर्थमतन्द्रिता ।
आयुर्धर्मादिभिर्युक्ता लग्नस्थे भृगुनन्दने ॥
प्रभूतगुणयुक्ता स्यात्सपणा च धनाश्रिते ।
पुंश्चली देवररता कन्या शुक्रे तृतीयगे ॥
यत्र सा भूषिता कन्या सुरूपा धनसंयुता ।
नित्य चतुर्थगे शुक्रे पञ्चमस्थे बहुप्रजा ॥
पत्युश्च बन्धुवर्गस्याविराद्धा षष्ठगे भृगौ ।
बन्धकी सप्तमस्थे स्याद्भार्गवे लोकगर्हिता ॥
व्याध्यर्दिता भवेच्छुक्रे मृत्युस्थे यमसाधनम् ।

भार्गवे नवमस्थे स्याद्धर्मयुक्ता प्रियंवदा ॥
सत्कर्मयुक्ता दशमे शुक्रे धर्मपरायणा ।
विधवार्थान्विता त्वाढ्या भवत्येकादशे भृगौ ॥
व्ययस्थे भार्गवे कन्या व्ययशीला प्रजायते ।
सौरे लग्नगते कन्या पुंश्चली दुर्भगा श्रया ॥
निर्धना कृपणा दीना धर्मस्थार्कात्मजे भवेत् ।
पुनर्दीनार्त्तिदुःखार्त्ता चन्द्ररोगेण च पीडिता ॥
पञ्चमस्थे सुपुत्रा स्यात् षष्ठस्थे हतबान्धवा ।
गर्भस्रावार्दिता नित्यं सप्तमस्थेऽर्कनन्दने ॥
अष्टमस्थेऽर्कपुत्रे स्यान्नित्यमामयवर्जिता ।
नष्टधर्मव्रता कन्या धर्मस्थेऽर्कात्मजे भवेत् ॥
चतुर्थ-सप्तमस्थश्च मृत्यु-वैधव्यकृद्भवेत् ।
राहुकेत्वोस्तथान्येषु निष्फलः स्याद्व्ययस्थितः ॥
पञ्च पाणिग्रहे दोषान् वर्जयेदेव चिन्तकः ।
दारिद्र्यं मृत्यु-वैधव्यं पौंश्चल्यमनपत्यताम् ॥
अष्टमात्षाड्ढमासाच्च तीर्थे वार्थे शुभाशुभाः ।
लग्नस्य पञ्चमस्थानाच्छुभस्थानस्थितान् ग्रहान् ।
कार्य्योविवाहो निर्दोषः कालो यस्मात्सुदुर्लभः ॥
मूर्त्तिकर्मात्मसुखचिचिकोणगते गुरौ ।
भार्गवे च विनश्यन्ति सर्वे दोषा विलग्नगे ॥
त्यक्ता च व्यय-नैधनानि तु सदा सौम्यग्रहाः सद्गुभं
षोकृश्यासुरपूजित शशधरोदुयिकव्नाभार्यंग ।

पापस्य ×××× चन्द्रभवन प्राप्ता चितैर्नन्दन
मुक्ता नैव भवेत् स वर्त्तिगमयी पाणिग्रहेष्विष्टदा[१] ॥
यो जन्मनि जन्मग्रहादष्टमराशिस्थितो भवेत् खचरः ।
स विवाहलग्नवर्त्ती शुभोऽप्यशुभं ददाति फलम् ॥
शौनकः ।

पञ्चभिरिष्टं रिष्टञ्च पुष्टमनिष्टमादेश्यं ।
स्थानादिबलसमेतैश्चतुर्भिरपि यवनैः ॥

अर्केऽनुकूले सुरपूजिते च
वृद्धिं प्रपन्ने भृगुनन्दने च ।
भवन्ति नार्य्यः सुत-सौख्य-सम्पत्-
सौभाग्यभाजः शतशश्चपत्नाः ॥
यद्याहवे सूर्य्यविधूपमर्द्दे
शृङ्गाटके धूमशिखे द्रुमे च ।
उपप्लवप्राधिणि चक्रवम्भे
प्राप्ते च पापान्तरगे च चन्द्रे ॥
अस्तमन्तयोर्वा परिवेषिणोर्वा
पाणिग्रहं खण्डितविम्बयोर्वा ।
शीतोष्णभासोर्विपरीतखेट-
कबन्धकालाग्निकयोर्निरस्त' ॥

पराशर' ।

दग्धपलाशउल्काकपाले समघनहत्ते षडङ्गुलोऽस्मैधे ।

---

(१) श्लोकोऽयं आदर्शानुरूप एव मुद्रित परन्त्वय न समीचीनो भाति ।

द्वादशमुखपरिणाहे जलपलषष्टिप्रपूरणी घटिका ॥

वात्स्य. ।

ताम्रपात्रं त्रिपलिकं षडङ्गुलसमायुतं ।

इत्युद्वाहकालः ।

---

## अथ वैवाहिककर्मकालः ।

वात्स्यः ।

कण्डनदलनयवाङ्कुरमण्डपमृद्वेदिवर्णकाद्यखिलं ।
तत्सन्धिगतागतमृते वैवाहिके कुर्य्यात् ॥
वैवाहिके तु दिवसे शुभे वाथ तिथौ शुभे ।
आमिचराशौ कन्याया लग्ने शुभसमन्विते ।
चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा ॥

इति वैवाहिककर्मकालः ।

---

## अथ परिणयनकालनिर्णयः ।

तत्र बृहस्पतिः ।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
वृषलीसहदीता यो ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥

आपस्तम्बः ।

प्राप्ते च द्वादशे वर्षे रजःस्त्रीणां प्रवर्त्तते ।
यस्तां विवाहयेन्मोहात् स ज्ञेयो वृषलीपतिः ॥
त्रिंशद्वर्षोद्द्वाब्दान्तु भार्य्यां विन्दति नग्निका ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

मनुः ।

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ।
वर्षैरेकगुणां भार्य्यामुद्वहेत् त्रिगुणः स्वयं ॥

इति परिणयनकालनिर्णयः ।

---

## अथ देयकन्याकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

अष्टवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥

संवर्त्तः ।

अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

अत्र 'वृषली' रजस्वला ।

तथाच देवलः ।

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥

बृहस्पतिरपि।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता॥

विष्णुः।

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
सा भवेत् वृषली ज्ञेया हरंस्तान्न दुष्यति॥

एतच्च प्रायिकं, कासाञ्चिद्वर्षेणैव रजोदर्शनात्।

अतएव यमः।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला॥

यानुनर्यम-पराशरापस्तम्बैरुक्तं।

प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति।
मासि मासि रजस्तस्याः पिता पिबति शोणितं॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
प्राप्ते द्वादशमे वर्षे रजः स्त्रीणां प्रवर्त्तते॥

एतदपि प्रायिकं, कासाञ्चित्तत्रापि रजोदर्शनाभावात्।

अतएवाह मनुः।

त्रिंशद्वर्षोवहेत्कन्यां हृद्यां द्वादशवार्षिकीं।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥

एवञ्च रजोदर्शनात्पूर्वं विवाह इत्युक्तं भवति।

तथाच गौतमः।

प्रदानात्प्रागृतोरप्रयच्छन्दोषी प्राग्वाससः प्रतिपत्तेरित्येके।

यमः ।

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।

वशिष्ठः ।

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।

ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

संग्रहे ।

यावच्चेलं न गृह्णाति यावत्क्रीडति पांशुभिः ।

यावद्दोषं न जानाति तावद्भवति नग्निका ॥

अमरसिंहः ।

नग्निकानागतार्त्तवेति ।

अङ्गिराः ।

अनवाप्तरजा गौरी प्राप्ते रजसि रोहिणी ।

अव्यञ्जना तु सा सोमा कुचहीना तु नग्निका ॥

व्यञ्जनेष्वथ जातेषु सोमो भुङ्क्ते तु कन्यकां ।

पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलां ॥

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।

विवाहो ह्यष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥

बृहस्पतिः ।

व्यञ्जने तु कुलं हन्यात्पितृन् हन्यात् पयोधरे ।

हन्यादिष्टञ्च पूर्त्तञ्च प्राप्ते रजसि कन्यका ॥

पराशरः ।

माता चैव पिता चैव ज्येष्ठोभ्राता तथैव च ।

त्रयोऽपि[1] नरकं यान्ति दृष्ट्वा कन्यां रजस्वलां॥

पैठीनसिः।

यावन्नोद्भिद्येते स्तनौ तावद्देया। अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकं प्राप्नोति पितामहः प्रपितामहश्चेति विष्ठायां जायते तस्मान्नग्निका देया।

याज्ञवल्क्यः।

अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ।

नारदः।

यावन्तश्चर्त्तवस्तस्याः समीयुः पतिना विना।

तावन्त्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति तां॥

यत्पुनर्मनुनोक्तं।

काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि।

न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥

तद्गुणवति सम्भवति गुणहीनाय न दद्यादित्येवंपरं, न पुनर्गुण-हीननिषेधार्थं।

यत आह यमः।

दद्याद्गुणवते कन्यां नग्निकामेव शक्तितः।

न त्वेव गुणहीनाय नोपरुध्याद्रजस्वलां॥

इति देयकन्याकालनिर्णयः।

---

(१) त्रयस्ते इति ग०।

## अथ स्वयम्वरकालनिर्णयः ।

यम ।

कन्या द्वादशमे वर्षे प्रदातुर्न स्वचे वरेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वय ॥

मनुरपि ।

त्रीणि वर्षाण्युदीचेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृश पति ॥
अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वय ।
नैन किञ्चिदवाप्नोति न च य साधिगच्छति ॥

सोऽपि न पापमाप्नोतीत्यर्थं ।

बौधायन ।

अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।

'सदृशे' गुणवति ।

वसिष्ठ ।

कुमारी ऋतुमती त्रीणि त्रीणि वर्षाण्युपासीत, ऊर्ध्वं त्रिवर्षेभ्य पति विन्देत तुल्य ।

यत्पुनर्गौतमेनोक्त ।

त्रीनृतूनतीत्य स्वय युज्यते ।

यच्च विष्णुनोक्त ।

ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयम्वर ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनस्तथा ॥

तदृतुत्रयादर्वाक्निषेधपरं, यदा तु न वर्षत्रयमवस्थातुमलं तदा ऋतुत्रयादूर्ध्वमपि वरयेत्।

कात्यायनः।

वरयित्वा तु यः कश्चित् प्रणश्येत् पुरुषो यदा।
रक्तागमांस्त्रीनतीत्य कन्यान्यं वरयेत्पति॥

'रक्तागमान्' ऋतून्।

नारदः।

प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद्वरं॥

'प्रतिगृह्य' वरयित्वा।

केचित्तु ऋतुत्रयादूर्ध्वं स्वयम्वरविधायकं पूर्वोदाहृतविष्णु-गौतम नारद-कात्यायनवचनधर्मानार्थत्वेन व्याचक्षते, तदयुक्तं। तत्र हि पितुरदानं प्रकृतं न तु वरयितुर्देशान्तरगमनं मरणं वा तस्मात् क्रमानुरोधात्पूर्व्ववैव व्याख्या श्रेयसी। यदा तु नैव कश्चित्कालात्कन्या रजोगमामप्रजेत्, अनुज्ञया तस्य वरं प्रतीक्ष्य वरयेत् स्वयं, कश्चि-द्दाता पक्षेषु सत्सु।

याज्ञवल्क्यः।

गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयम्वरं।

'गम्यं' गमनार्हं।

इति स्वयम्वरकालनिर्णयः।

---

## अथ चतुर्थाश्रमस्वीकारकालनिर्णयः ।

उषित्वैव ततः सम्यक् तृतीयं ह्याश्रमं प्रति ।
चतुर्थमाश्रमं गच्छेत् कृतहोमो जितेन्द्रियः ॥

मत्स्यपुराणे ।

चतुर्थे त्वायुषः शेषे प्रशमित्वा श्रमं व्रजेत् ।
केश-लोम-नखान्वाप्य वानप्रस्थोमुनिस्ततः ॥
आश्रमादाश्रमं सद्यः पूतो भवति कर्मभिः ।
सोऽपि तस्य पिता तादृक् क्रमेण सुसमाहितः ॥
वानप्रस्थं समास्थाय चतुर्थाश्रमसभ्यगात् ।
वने चरन्निहत्यैव(१) तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्तसङ्गः परिव्रजेत् ॥

तृतीयं भागमिति यावता कालेन तपःसिद्धिः विषयाभिलाषश्च निवर्त्तते तावद्विवक्षित, न हि मुख्यस्तृतीयः कालो न यावति च वयसि मदावेशः तदा तदा संवेद्यते तदा परिव्रजेदित्यर्थः ।

आश्रमादाश्रमं गत्वा कृतहोमो जितेन्द्रियः ।
भिक्षावलिपरिश्रान्तः प्रव्रजेत्प्रेत्य वर्द्धते ॥

समुच्चयपक्षाश्रयमेतत्, यदा गृहस्थाश्रमं वानप्रस्थाश्रमौ उभो-भयावश्यकानुष्ठानेन जितेन्द्रियः तदा प्रव्रजनवर्द्धनं इति पूर्वाश्रम-धर्मानुवादः ।

मार्कण्डेयपुराणे ।

अनुत्पाद्य सुतान्देवानसन्तर्प्य पितॄंस्तथा ।

(१) वनेष्वनुविहृत्यैवेति ख० ।

भूतादींश्च कथं मौढ्यात् स्वर्गतिं गन्तुमिच्छसि ॥

कालिकापुराणे ।

अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्म्मतः ।
ऋणानि त्रीण्यपाकृत्य दत्त्वा यज्ञैश्च संन्यसेत् ॥
गुरुणानुमतः स्नात्वा सदारो वै द्विजोत्तमः ।
अनुत्पाद्य सुतं नैव ब्राह्मणः प्रव्रजेद्गृहात् ॥

ब्रह्मवैवर्त्ते ।

ऋणत्रयापाकरणमविधायाजितेन्द्रियः ।
राग-द्वेषावनिर्जित्य मोक्षमिच्छन् पतत्यधः ॥

मनुः ।

ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥

मोक्षैकफलत्वात् ज्ञानमेव चात्र मोक्षशब्देनोच्यते, अतएव मोक्षं सेवमान इत्युक्तिः ।

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा तु शक्तितो यज्ञैर्मनोमोक्षे निवेशयेत् ॥
अनधीत्य द्विजोवेदं अनुत्पाद्य तथात्मजान् ।
अनिष्ट्वा चैव यज्ञेषु मोक्षमिच्छन् व्रजत्यधः ॥

समुच्चयपक्षमाश्रित्येतरपक्षनिन्दावचनं न पुनः प्रतिषेधः उदितानुदितहोमवत्, अन्यथा "यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेदिति प्रत्यक्षश्रुतिवाक्यश्रुतिविरोधः स्यात् । "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः

एष वा अनृणीयः पुत्री यज्वी ब्रह्मचारी वासीति एतत्तैत्तिरीय-श्रुतिवचनमपि समुच्चयपक्षाश्रयमेव।

शङ्ख-लिखितौ ।

वनवासादूर्ध्वं शान्तस्य परिणतवयसः कामतः परिव्रजनमेवाग्नि-मात्मन्यारोप्य व्यपगतभय-लोभ-मोह-क्रोध-शोक-द्रोह-मद-मत्सर-कलत्रस्योचितवेदनावस्थितमनसः श्रद्धायनियतं भवति तस्मात्तद-हरेवोपासीत यदहरेव संन्यसेत् सर्वारम्भपरिग्रहानुत्सृज्य ।

विष्णुपुराणात् ।

पुत्र-द्रव्य-कलत्रेषु त्यक्तस्नेहो नराधिपः ।
चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः ॥
दिवा दिव्ये च भोगे तु विषये पञ्चलक्षणे ।
दृष्टानुश्राविके चैव विरक्तः संन्यसेदनात् ॥

कूर्मपुराणे ।

किञ्चिच्छ्रेयस्करतमं लोकेऽस्मिन् ब्रह्मसत्तमाः ।
यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः ॥
आराध्य तपसा देवं योगिनं परमेश्वरम् ।
प्रव्रजेद्विधिवद्यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान् ॥
वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकं ।
व्याध्यदिष्टोविरक्तो वा नातुरोवाथ दुःखितः ॥
आतुराणां विशेषोऽस्ति न विधिर्न च सत्क्रिया ।
प्रैषमात्रस्तु सन्न्यास आतुराणां विधीयते ॥
उत्पन्ने सङ्कटे घोरे चोर-व्याघ्रादिगोचरे ।

भयभीतस्य सन्न्यास अङ्गिरा मुनिरब्रवीत् ॥
विरक्तः सन्न्यसेद्विद्वानिष्ट्वापि द्विजोत्तम ।
अथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयेत् ॥
तपस्तप्त्वा तपोयोगाद्विरक्तः सन्न्यसेत्तदा ।
अकर्त्तुमसमर्थोऽपि जुहोति यजतिक्रिया ॥
अन्धः पङ्गुर्दरिद्रो वा विरक्तः सन्न्यसेद् द्विजः ।
सर्वेषामेव वैराग्य जायते सर्ववस्तुषु ।
तदैव सन्न्यसेद्विद्वानन्यथा पतितो भवेत् ॥

यम ।

चीर्णवेदव्रतो विद्वान् ब्राह्मणो मोक्षमाश्रयेत् ।
सम सर्वेषु भूतेषु शान्तात्मा परिव्रजेत् ॥
पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत् ।
वनाद्वा धूतपापो वा परं पन्थानमाश्रयेत् ॥

कूर्मपुराणे ।

उत्पन्नज्ञानविज्ञानो वैराग्य परम गतः ।
यत् भजेत् ब्रह्मचर्यादीन् यदीच्छेत्परमाङ्गति ॥
दारानाहृत्य विधिवद्यथावद्विविधैर्मखैः ।
यजेदुत्पादयेत्तत्रस्थो विरक्तो यदि सन्न्यसेत् ॥
अनिष्ट्वा विधिवद् यज्ञैरनुत्पाद्य तथात्मजं ।
न गार्हस्थ्य गृहीत्वा तु सन्न्यसेत् बुद्धिमान् द्विजः ॥
अथ वैराग्यवेगेन स्थातु नोत्सहते गृहे ।
तदैव सन्न्यसेद्विद्वाननिष्ट्वैव विचारयेत् ॥

प्रथमादाश्रमाद्वापि विरक्तो भवसागरात् ।
ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत् ॥
अथ तृतीयं सम्प्राप्य गृहस्थाश्रममुत्तमं ।
चतुर्थमायुषोभागं तत्स्थो वापि परिव्रजेत् ॥
इति चतुर्थाश्रमकालनिर्णयः ।

---

## अथाग्निहोत्राधान-दारस्वीकारकालनिर्णयः ।

तत्र मनु-शातातपौ ।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

स च सोदरोभ्राता नान्यजो नान्यमातृजः । एतदेवोत्तरत्र स्फुटीभविष्यति, तथा पतितोन्मत्त-नपुंसकान्ध-बधिर-मूक-जड़-कुब्ज-कुष्ठि-श्वित्रि-राजयक्ष्मोदराद्यसाध्यमहारोगाभिभूत-नास्तिक-ब्रह्मयोगिप्रव्रजितचिरकालप्रोषितेषु एतेष्वदोष इत्यवगन्तव्यं । एतेषां परिणयादावधिकारस्याविद्यमानत्वात् ।

अत एव छन्दोगपरिशिष्टे कात्यायनः ।

देशान्तरस्थ-क्लीवैकवृषणांश्च सहोदरान् ।
वेश्याभिसक्तं पतित-शूद्रतुल्याधिरोगिणः ॥
षण्ड-मूकादि-बधिर कुब्ज-वामन-कुण्डकान् ।
अतिवृद्धानदारांश्च कृषिसक्तान् नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुलटोन्मत्त-चोरांश्च परिविन्दन्न दुष्यति ॥

शातातपः ।

क्लीवे देशान्तरस्थे वा पतिते प्रव्रजिते तथा(१) ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

सुमन्तुः ।

व्यसनासक्तचित्तो वा नास्तिको वाथ वा पुनः ।
कनीयान् धर्मकामस्तु आधानमथ कारयेत् ॥
पितृव्यपुत्रान् सापत्न्यान् परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

अत्र वाक्यको ।

दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः ।

इति पाठः । 'परनारीसुतान्' दत्त-शौनकादिभ्रातॄन् ।

वशिष्ठ' ।

अष्टौ दश-द्वादशवर्षाणि भ्रातरमनिविष्टमप्रतीक्षमाणः प्राय-
श्चित्ती भवति,

अनिविष्टे साचोदरे, भवन्ति चात्र श्लोकाः ।

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः ।
न्याय्यं प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥
उन्मत्तः किल्विषी कुष्ठी पतितः क्लीव एव वा ।
राजयक्ष्मादियुक्तश्च न न्याय्यः स्यात् प्रतीक्षितुम् ॥
षण्ड-वामन कुब्जान्ध-पतितोन्मत्त-कुण्डकान् ।

---

(१) पतिते प्रजिते तथेति पाठे न्यूनाधिक्यदोषो भवितुमर्हतीति विभावनीयः ।

रोगि-बधिर-मूकेषु न दोष. परिवेदने ॥

सुमन्तुः ।

ज्येष्ठोभ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।

अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

तथा वृद्धवशिष्ठः ।

अग्रजस्तु यदानग्निरादध्यादनुजः कथं ।

अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि ॥

एतच्चाधिकारिणि भ्रातरि अकुर्वति वेदितव्यं। अनधिकारिणि व्यतिक्रमाभावाच्च तदनुज्ञापदस्य युज्यते ।

अतएव हारीतः ।

सोदराणान्तु सर्व्वेषां परिवेत्ता कथं भवेत् ।

दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

अस्यार्थः। सोदरेऽप्यज्येऽधिकारिणि अकृतविवाहे विवाहमीहमाने अचिरादितेऽवतिष्ठति तदनुज्ञां श्रौताधानवद्विवाहो न कदाचनापि कर्त्तव्यः।

यदाहोशनाः ।

पिता पितामहो यस्य नापजीवाय कस्यचित् ।

तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥

सुमन्तुः ।

पितुर्यस्य तु नाधीतं कथं पुत्रस्तु कारयेत् ।

अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥

अत्राप्यनुज्ञाते स्थिते वा भ्रातातप ।

अग्रयः परिविन्दन्ति कनिष्ठस्य या च कन्या विक्षयिका।
एतच्चाधिकाररहिते भ्रातरीति पूर्ववचनादतिकुब्जया ज्येष्ठापि
सती न कनिष्ठाया विवाहविघ्नहेतुर्भवितु मर्हतीति।

इत्यग्निहोत्राधान-दारस्वीकारकालनिर्णयः।

---

## अथावसथ्याधानकालनिर्णयः।

तत्र याज्ञवल्क्यः।

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्त्तते।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते॥

अत्र केचिदाहुः।

दाराग्निहोत्रसंयोगं यः कुर्य्यादग्रजे स्थिते।

इत्यग्निहोत्रशब्दोपादानादौपासनपरिग्रहेऽपि नैव परिवेदनं
भवति शब्दशक्तेरन्यनिष्ठत्तिफलत्वादिति तदयुक्तं अन्यनिवृत्तेर-
शाब्दत्वात्।

अतएवाह गार्ग्यः।

सोदर्य्ये तिष्ठति ज्येष्ठे न कुर्य्याद्दारसंग्रहं।
आवसथ्यं तथाधानं पतितस्त्वन्यथा भवेत्॥

ब्रह्मगर्भोऽपि।

याजनाध्यापनैरेव अनिन्द्योऽभ्योधनेन च।
उपासनं समादध्यात् स्वकाले परिवेदयन्॥

'स्वकाले' यथाविहितकाले।

तथाच स्मृतिः ।

आधानं विधिवद्देयकुलभ्रष्टाद्यापि वा ।
मघानवादरस्त्रीवो दार-दायादकालयोः ॥

पारस्करः ।

आवसथ्याधानं दारकाले दायादकाले एकेषां ।

गौतमः ।

पुत्रमुत्पाद्यावसथ्याधानं कृत्वातिथीन् संपूजयेत् ।

व्यासः ।

अग्निर्वैवाहिको येन न गृहीतः प्रमादिना ।
पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः ॥
यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृत ॥

ज्येष्ठस्याधिकारिण एतद्द्रष्टव्यं कनीयांस्तु कृताग्निवोनेऽपि ज्येष्ठे भ्रातरि वेदाध्ययनाद्यासक्तो नैवाग्निपरिग्रहमकुर्वन्नपि प्रत्यवायेन सह संगच्छते ।

अत्र गर्गः ।

पितृपाकोपजीवी वा भ्रातृपाकोपजीवकः ।
ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना ॥

अनधीतवेदस्यापि समावृत्तविवाहः सत्यव्रतेन दर्शित. ।

अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथा तथा ।
अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे ॥

इत्यावसथ्याधानकालनिर्णय. ।

## अथाग्निहोत्रकालः।

तत्र कात्यायनः।

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥
रात्रेस्तु षोड़शे भागे ग्रह-नक्षत्रभूषिते।
कालं त्वनुदितं ज्ञात्वा होमं कुर्य्याद्विचक्षणः॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले।
रविर्यावन्न दृश्येत समयाध्युषितं च तत्॥
रेखामात्रं प्रदृश्येत रश्मिभिश्च समन्वितः।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत्॥

शङ्खः।

सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि।

बौधायनः।

आसायं कर्म्मणः प्रातराप्रातः सायकर्म्मणः।
आहुतिर्नातिपद्येत पार्व्वणं पार्व्वणान्तरात्॥

मौचायणीयपरिशिष्टे।

अपयोरु स प्राजापकः आयंते अग्निहोत्रिणां पवान्ने समस्त-होमानपास्य तथा द्विराचैव-पञ्चरात्रयो दिमासार्द्धमासायाग्निहोत्र-मजुहुवुस्तस्मादायावेर आमयाव्यार्त्तोवार्धमासायाग्निहोत्रं जुहुयात् उपसेव्येऽहनि प्रातःसाय चतुर्द्दश चतुर्गृहीतानि प्रातश्चतुर्द्दश(१)।

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परन्त्वयं न समीचीन प्रतिभाति।

चतुर्दशग्रहणमुपलक्षणार्थं, कदाचित् पञ्चदशापि भवन्ति कदाचिच्चतुर्दशीतानि कदाचित् षोडशानि ।

मरीचिः ।

पञ्चहोमानथोद्दत्त्वा गत्वा कस्माच्चिवर्त्तते ।
होमं पुनः प्रकुर्वीत भवेच्च न स दोषभाक् ॥

इत्यग्निहोत्रकालनिर्णयः ।

---

## अथ प्रासादाद्यारम्भकालः ।

यथाकालं शुभं ज्ञात्वा सदा भवनमाचरेत् ।
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ॥
वैशाखे धन-रत्नानि ज्यैष्ठे मृत्युस्तथैव च ।
आषाढे भृत्य-रत्नानि पशुवर्गमवाप्नुयात् ॥
श्रावणे भृत्यलाभश्च हानिर्भाद्रपदे भवेत् ।
पत्नीनाश आश्विने स्यात्कार्त्तिके धन-धान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतोभयम् ॥

'भक्तं' भक्ष्यमात्रोपलक्षणम् ।

लाभञ्च बहुशो विन्द्यादग्निं माघे विनिर्द्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालबलं स्मृतम् ॥

विश्वकर्ममते ।

चैत्रे शोकाकुलोभर्त्ता वैशाखे च धनान्वितः ।
ज्यैष्ठे गृही विपद्येत नश्यन्ति पशवः शुचौ ॥
श्रावणे धनवृद्धिः स्याद्भाद्रे न वसेद्गृही ।

कन्यादश्चाश्विने मासि भृत्या नश्यन्ति कार्त्तिके ॥
मार्गशीर्षे धनप्राप्तिः सहस्रे कामसम्पदः ।
'सहस्रः' पौषः ।
माघे भवेदग्निभयं फाल्गुने श्रीरनुत्तमा ॥
तथा सङ्ग्रहे ।
व्याधिः शोकोभवेच्चैत्रे वैशाखे धनरत्नयुक् ।
गो-महिष्यादिभिर्युक्तो गृहमेधी सदैव हि ॥
ज्यैष्ठे मृत्युमवाप्नोति आषाढ़े पशुनाशनम् ।
भृत्यलाभः सुरत्नानि लाभोऽर्थस्य तथैव च ॥
श्रावणे भृत्यलाभस्तु धनवृद्धिरनाकुला ।
मासि भाद्रपदे गेहं दुःखद जायते ध्रुवम् ॥
तत्र सर्वसुखानिस्तु भवेत्तद्गृहमेधिनः ।
आश्विने तु भवेन्नित्यं पत्नीनाशस्तथा कलिः ॥
कार्त्तिके स्याद्धनं धान्यं भृत्यनाशोऽप्यहर्निशम् ।
अत एव प्रशस्यन्ते प्रासादारम्भणे सुताः ॥
मार्गशीर्षे गृहारम्भो धनलाभसुखप्रदः ।
भक्ष्यं वै विविध तत्र वस्त्रयादिसुरत्नकम् ॥
ताम्बुलाभ गृहभद्राव प्रजालाभो महानपि ।
मित्राणां चैव पुत्राणां स्त्रीणां लाभः परोभवेत् ॥
पौषे भीतिः परिज्ञेया तस्कराणां सुदारुणा ।
धन-धान्यादिलाभः स्यात् पुत्र-मित्रादिसम्पदः ॥
माघे वह्निभय ज्ञेयं सर्वदुःखापहस्तदा ।

फाल्गुने चैव विज्ञेयो लाभ काञ्चनज शुभ ॥
पुत्रलाभो महानच सुख सौहृदसयुत ।
इति मासफल प्रोक्त त्रैविध्यमधुना ब्रुवे ।
उत्तम मध्यमञ्चैव कनिष्ठञ्चेति तत् त्रिधा ॥
वैशाखे श्रावणे चैव मार्गशीर्षे च फाल्गुने ।
उत्तमास्ते समाख्याता कथ्यन्ते मध्यमास्तथा ।
आषाढे कार्त्तिके पुष्ये मध्यमाश्चेति कीर्त्तिता ॥
कनिष्ठास्तान् समाख्यास्ये निशामय समासत ।
चैत्रो ज्यैष्ठो नभस्य इषुरौपोमासा कनिष्ठका ॥

'ईष' आश्विन ।

फलमेषा समासेन कथित तत्परिस्फुटम् ।

अपराजितपृच्छायाम् ।

रवौ कन्या-तुलालिस्थे वास्तो पूर्वे शिर स्थितम् ।

'अलि' वृश्चिक ।

चापे च मकरे कुम्भे दक्षिणेन व्यवस्थितम् ।
आदित्यवारयोगेन स वास्तु भवति भ्रमात् ॥
यत्र भानु शिरस्तत्र लक्षितव्य रविक्रमात् ।
देवागार गृहञ्चैव न कुर्याच्छीर्षसम्मुखम् ॥
मृत्युरोगभयानि स्यु प्रशस्त कुक्षिसम्मुखम् ।
तुला वृश्चिक कन्यासु भास्करो यदि सस्थित ।
न तदा प्राङ्मुख कुर्यात् गृह भवति निष्फलम् ॥
धनुर्मकर कुम्भेषु यदा तिष्ठति भास्कर ।

तदा याम्यमुखं वेश्म राज-चौराग्निभीतिदम् ॥
मीने मेषे वृषे प्रत्यङ्मुखं शोककलहावहम् ।
मिथुने कर्कटे सिंहे न कुर्याच्चोत्तराननम् ।
तथा कृतं भवेद्वेश्म दोष-शोक-भयावहम् ॥

विश्वकर्मा ।

रवौ कन्या-तुलालिस्थे गृहं वारुणदिङ्मुखम् ।
न कुर्यात्तद्धि शून्यं स्यात्र च वृद्धौ भवेत् प्रभो ॥
दक्षिणाभिमुखं कुम्भ-मृगचापस्थिते रवौ ।
कुर्वीत निष्फलं तस्मात् नृपदण्ड-वधादिकृत् ॥
न मीन-वृष-मेषस्थे कुर्वीत प्राङ्मुखं रवौ ।
तद्धनघ्नं नलिष्टुद्रराजचौरादिभ्यतः ॥
रवौ मिथुन-सिंहस्थे न कर्कस्थेऽप्युदङ्मुखम् ।
कुर्यात्तद्धि दरिद्रत्वं दद्यात्व चण्डदीपताम् ॥

विश्वकर्मप्रोक्ते ।

अधुना कुण्डलीचक्रं रविचक्रायुधं ध्रुवम् ।
रेखाद्वयं प्रकर्त्तव्यं तत्र वै पूर्वपश्चिमम् ॥
दक्षिणोत्तरगन्तव्ये रेखैका वह्नि-वायुगा ।
ईश-नैर्ऋतगा चैका तत्र राशींस्तु विन्यसेत् ॥
क्रमादीशानरेखाया रेखाद्वादशकं भवेत् ।
तत्र कन्यादिसिंहान्ता राशयो द्वादश क्रमात् ॥
यत्र यत्र भवेद्भानुस्तत्र वास्तुशिरः स्थितम् ।
लग्नाणात् सप्तमे राशौ वास्तोर्दृष्टिः पतेत् क्रमात् ॥

यद्रेखायां भवेत्सूर्यो वास्तुमस्तकसंयुतः ।
तद्रेखायपितं राशिं संमुखञ्चैव दूषयेत् ॥
रविदृष्टिगतं राशि जानीयात्त्वभिधामितम् ।
रविभुक्तस्तु यो राशिः स च दग्ध' प्रकीर्त्तितः ॥
शिरःस्थिते न कर्त्तव्यं रवौ द्वारं कथञ्चन ।
यद्यज्ञानात्कृते तस्मिन् भयं स्याद्गृहमेधिन' ॥
वास्तुदृष्टिस्थिते राशौ यद्द्वारन्तु वेश्मनः ।
धननाशो भवेत्तत्र पुत्र-मित्र-परिच्छद. ॥
रविरेखागते राशौ कृते रोगभय महत् ।
रोग-चोरादिभिश्चैव वह्नि-राजकुलादिभिः ॥
रविदृष्टिगते राशौ गृहद्वारन्तु यत्र हि ।
तत्र संवसतो नित्यं रोग-दु.ख सुदारुणम् ॥
दग्धे द्वारे कृते ज्ञानात्तत्रस्थं स्याद्धनक्षयः ।
नक्रस्थे कुम्भगे भानौ सिंहगे कर्कटे तथा ।
पूर्वास्यं पश्चिमास्यञ्च सदा गेहं प्रकारयेत् ॥
फलमेतत् समुद्दिष्टं वर्णानां भवनाश्रयम् ।
कन्यादौ नारभेद्वेहं मङ्गलार्थी कदाचन ॥

कुण्डलीचक्रस्य फलितार्थमाह ।

फलोद्देशं प्रवक्ष्यामि प्रत्येकेन परिस्फुटम् ।
सुखवृद्धिस्तथा शान्तिः सर्वपापोपमर्दनम् ॥
वस्तुनाशस्तथा तत्र नक्रस्थे फलमीदृशम् ।
भूरिलक्ष्मीप्रदश्चैव पाशुभिश्च यतो गृही ॥

एवमादि फलं ज्ञेयं कुम्भे वै सर्वमासि च ।
पुत्राः पौत्राः प्रवर्द्धन्ते मन्त्रीरविचला भवेत् ॥
गृहस्य वृत्तिमान्भर्त्ता सुख-सौभाग्यसंयुतः ।
सिंहे त्वविकलं सर्वमेवमादि फलं भवेत् ॥
दृष्टः पुष्टः सुमपत्नो बहुगावः श्रियान्वितः ।
भर्त्ता वै लभते सौख्यं कर्के च फलमीदृशम् ॥
मेषे वृषे तुलायाञ्च वृश्चिके च यदा रविः ।
उद्गार्थं मस्यैव मेतदार्थं प्रकारयेत् ॥
एतेषान्तु क्रमेणैव फलमच वदाम्यहम् ।
शुभलक्ष्मीफलं सौम्यं पुत्र-पौत्रसमृद्धये ॥
महाभागी भवेन्नून सर्वसौभाग्यसंयुतः ।
एवमादि फल मेषे भर्त्ता वै लभते चिरम् ॥
वृषे सौम्यं चिरा लक्ष्मीः धनवृद्धिरनाकुला ।
पुत्राश्च बहवस्तस्य जायन्ते शोभनास्त्रियः ॥
एवमादि फलं भर्त्तुस्तत्र प्रोक्तं मनीषिभिः ।
तुलायां प्रोच्यते सम्यक् फलमिष्टतमं नृणाम् ॥
धनं धान्यं सुख भोगो गोऽश्व-पुत्रसमृद्धय ।
बहुमित्रास्तथा भृत्याः पशवः शोभना गृहे ॥
पुत्रराशिस्तथा भर्त्तुस्तुलायामीदृशं फलम् ।
विधत्तां सद्वयः सम्यक् स्वकुले वृद्धिरेव च ॥
धनवान् भोगसम्पन्नो भर्त्ता स्यादन्नभान्वितः ।
एवमादि फल तत्र वृश्चिके जायते ध्रुवम् ॥

नक्र कुम्भौ प्रतिज्ञेयौ प्रकाम्ये मन्दिरे स्थितौ ।
हरि-कर्कटकौ ज्ञेयौ प्रतीचीमुखवेश्मन ॥

'हरि' सिंह ।

मेषोदयस्तथा चैतौ सौम्यागारभवे स्थितौ ।
तुला च वृश्चिकश्चैव दक्षिणस्थामुभौ स्थितौ ॥
कोणस्थानामथोवच्चे कन्यादीनां फलं यथा ।
यत्र कन्यास्थितोऽध्वाङ्गो धनुर्धर्मसमाश्रयात् ॥
शुनि मीन-खरे चैव मिथुन सर्वदा स्थितम् ।
कन्यां प्राप्ते रवौ सम्यक् नारभेत गृहं सुधीः ॥
स षड्भिस्तत्र जायेत पुत्र-पौत्रपशुक्षय ।
सर्वदार्त्तियुतोभर्त्ता वसेद्व स सशय ॥
धनुस्थिते रवौ कार्य नैव गेहं कदाचन ।
प्रभुभिर्घात्यते तत्र जायन्ते हि न सम्पद् ॥
अथवा राजदण्डेन पीड्यतेऽसौ वसन् गृही ।
यदा भानुस्तु मीनस्थस्तदा गेहं न कारयेत् ॥
हृतवेद्व्याधिशोकाय भयाय विपुलाय च ।
अधीरत्व तदा तस्य ग्लानि स्यान्मीनत फलम् ॥
मिथुनस्थो यदा भानुस्तदा वेश्म न कारयेत् ।
अग्निना दह्यते तद्वे वेश्म दुःखप्रदं सदा ॥
मीनस्थे वह्निदिग्भागे गृहारम्भोऽग्निजीविनाम् ।
मिथुने त्वाग्नपारम्भ ईशे मध्याभिना स्थित ॥
वायव्ये कन्यका ज्ञेया गृहारम्भ सुखप्रदः ।

स्वरोपजीविनां चैव वेश्यादीनां सदैव हि ॥
नैर्ऋत्यां कार्मुके च स्यादारम्भः श्वपचां गृहे ।
इदानीं कथये वेश्म राशि-मासक्रमागमम् ॥
चैत्रे मेषो भवेद्यत्र तत्र गेहं न कारयेत् ।
कृते व्याधिर्भवत्यत्र जायते गृहमेधिनाम् ।
ज्यैष्ठे तु मिथुनं यत्र तत्र द्वैधं भवेत् सदा ॥
'द्वैध' द्वन्द्वयुद्धमिति यावत् ।
आषाढे कर्कटोद्दृष्टो नभस्ये कन्यका तथा ।
आश्विने तु तुला दृष्टा वृश्चिकः कार्त्तिके तथा ॥
चाप मार्गे भवेद्दृष्ट तेन मार्गो न शोभन ।
माघे कुम्भस्तु वै दृष्टस्तचारम्भो न शोभन ॥
मासि मासाष्टकश्चेति दूषितं वै परस्पर ।
तेन चैषु न कर्त्तव्यं मन्दिरं शुभमिच्छता ॥
तथा ।
सिंहगं मेषगं चैव गुरुं यत्नेन वर्जयेत् ।
अस्तङ्गते गुरौ शुक्रे गृहारम्भो न शस्यते ।
नातिचीणे निशानाथे गृहारम्भो भवेदिह ॥
विष्णुधर्मोत्तरे ।
शारदृकाले न कर्त्तव्यं वास्तुकर्म विजानता ।
तपस ।
कृष्णपक्षान्ते त्रिभागे कृष्णैकादश्यमारभ्य दिनपञ्चके शुक्लपक्षाद्दे त्रिभागे शुक्लप्रतिपदमारभ्य दिनपञ्चके, एवं कृष्णैकादश्यमारभ्य दिनदशक त्रिविध भवति ।

तथा ।

चतुर्थीं नवमीञ्चैव वर्जयेच्च चतुर्द्दशीम् ।

विश्वकर्ममते ।

तिथयो यत्र शस्यन्ते या शुभा वास्तुकर्म्मणि ।
शस्ते मासि सिते पक्षे प्रतिपच्च द्वितीयया ॥
तृतीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।
एकादशी-त्रयोदश्यौ पूर्णमासी प्रकीर्त्तिता ॥
एता पूर्णेति विख्याता नामतस्तिथयस्त्विमा ।
चतुर्थी वाथ षष्ठ्या वा दक्षिणास्य विवर्जयेत् ॥
तत्र भवषतो यस्मान्महाव्याधिभय भवेत् ।
तथा वारा' प्रशस्यन्ते रवि मङ्गलवर्जिता ॥
दिष्ण्यान्तरीच चितिजैत्यातैर्भवपीड़ितम् ।
ग्रहोपसृष्ट मन्त्याज्य व्यतीपातहतञ्च यत् ॥

'ग्रहोपसृष्ट पापग्रहदूषितम् ।

चन्द्र-तारानुकूले मे कर्त्तुं कार्यं विजानता ।
ध्रुवाणि तानि शस्तानि शाक्रश्रेष्ठं त तथा ॥

'ध्रुवाणि रोहिण्युत्तरात्रय चेति ।

वायव्य वैष्णव पुष्य पौष्ण सावित्रमेव च ।

मत्स्यपुराणे ।

वज्र व्याघात शूलेषु व्यतीपातातिगण्डयो ।
विष्कुम्भ गण्ड परिधान् वज्रयोगेषु कारयेत् ॥

विश्वकर्ममते ।

अथ योगान् प्रवक्ष्यामि वर्जिता ये मनीषिभिः ।
अतिगण्डो व्यतीपातः परिघो वज्र एव च ॥
गण्डं शूलश्च विष्कुम्भो व्याघातश्च सुदुःखदः ।
एतान् योगान् समावर्ज्य अभावे तेषु चैव हि ॥
विष्कुम्भे घटिकास्तिस्रः पञ्च वा वर्जयेत्सुधीः ।
वज्रे तु घटिकास्तिस्रो नव वा परिवर्जयेत् ॥
अतिगण्डेषु वै षट्कं नव वा दोषदायकाः ।
गण्डे तु घटिकाः षड्वा व्याघाते नव षट् च वा ॥
शूले तु घटिकाः पञ्च सप्त वा दोषदा मताः ।
वैधृतौ च व्यतीपाते घटिकाषष्टिरेव च ॥
परिघे घटिकास्त्रिंशत् षट्त्रिंशदथवा शुभाः ।
एतेषां घटिकाः शेषाः सर्वास्त्वन्याः शुभावहाः ॥
योगाः शुभावहाः कार्य्या वास्तुस्थापनकर्म्मणि ।
यथा नाम तथा तेषां फलसिद्धिरुदाहृता ॥

तथा ।

करणान्यथ वक्ष्यामि वास्त्वारम्भे शुभाय वै ।
तैतिलं वणिजं नागं बालवं करणान्तरम् ।
धन-धान्यकराणि स्युः श्रेयसे च सुखाय च ॥

विष्णुधर्म्मोत्तरे ।

अङ्गारकदिनं नाम करणं विष्टिसंज्ञकम् ।
वर्जयेदित्यनुषङ्गः ।

मत्स्यपुराणे ।

श्वेते मैत्रेऽथ माहेन्द्रे गन्धे वाति विरोहणे।
तथा वैराजसाविन्ने मुहूर्त्ते गृहमारभेत् ॥
चन्द्रादित्यबलं लब्धा लग्नं शुभनिरीक्षितम्
स्तम्भोच्छ्रयादि कर्त्तव्यमन्यत्र परिवर्जयेत्।
प्रासादेऽप्येवमेव स्यात् कूप वापीषु चैव हि ॥

विश्वकर्ममते।

मुहूर्त्तान् कथयिष्यामि ये उक्ते सर्वसम्पद।
माहेन्द्रे रौहिणे चैव साविन्ने मित्रके तथा ॥
गन्धर्वेऽभिजिति श्वेते मुहूर्त्ते कारयेत् गृहान्।
अथ साधारणान् ब्रूमो मुहूर्त्तान् सप्त चैव हि ॥
विराजोविजय श्वेत साविन्नो मैत्रिकोऽभिजित्।
खलश्चेति समाख्याता सर्वे सर्वार्थसिद्धिदा ॥
अथ वारविशेषेण वर्जनीयान् ब्रवीमि ते।
अर्यम्णोऽर्के तु वैराज्यश्चन्द्रे वै ब्रह्मराक्षसौ ॥
पिता शैवौ कुजे गन्धौ बुधे चैवाभिजित्तथा।
पितृब्राह्मौ तथा शुक्रे राक्षसाख्यौ दृहस्पतौ।
भौजङ्गेशौ मुहूर्त्तौ तौ वर्जनीयौ शनैश्चरे ॥

विष्णुधर्मोत्तरे।

स्थिरलग्ने स्थिरांशे च कर्तुरुपचयान्विते।

'स्थिरलग्नानि' वृष सिंह दृश्चिक-कुम्भा। 'कर्तु' कर्त्तृराशे,'उपचयान्विते' त्रिषडेकादशस्थानस्थिते।

तथाच जातके।

चिषडेकादशदशमान्युपचयभवनान्यतोऽन्यथान्यानि ।

यस्य सौम्या ग्रहाः केन्द्रे त्रिकोणे चापि भार्गवः ।
पापाश्चोपचयस्थाने तस्मिन् कार्य्यं निवेशनम् ॥

बृहस्पति-शुक्र-बुध-चन्द्राः 'सौम्याः'। क्षीणेन्दु-रवि-मङ्गल-शनैश्चराः 'पापाः', संयुक्तो बुधश्च।

तथाच लघुजातके।

क्षीणेन्द्वर्क-यमाराः पापास्तैः संयुतः सौम्यः।

'यमः' शनैश्चरः, 'आरः' मङ्गलः, 'सौम्यः' बुधः इति। 'केन्द्राणि' स्थानानि प्रथम-चतुर्थ-सप्तम-दशमस्थानानि।'त्रिकोणं' नवपञ्चमस्थानं।

तथाच जातके।

केन्द्रचतुष्टयं कण्टकञ्च लग्नात् सप्तदशचतुर्थानां सञ्ज्ञाः इति,
नवपञ्चमं त्रिकोणं नवर्चत्रिकोणं चेति।
केन्द्रस्थं वर्जयेत्पापं सर्वयत्नेन कर्मसु।
केन्द्रसौम्ययुतं देवं न तु शून्यं कदाचन॥

विश्वकर्ममते।

अथ लग्नं प्रवक्ष्यामि गृहारम्भे शुभावहं।
वृषो धनुस्तुला-कन्या मिथुनं कलसस्तथा॥
लग्नान्येतानि धन्यानि गृह-प्रासादकर्मणि।
कृतमेतेषु लग्नेषु सर्वसिद्धी भवेदिह॥
एकादशे तृतीये च षष्ठे पापग्रहाः शुभाः।
पापग्रहेऽष्टमे चैव मरणं प्राप्यते ध्रुवं॥
चन्द्रार्कादिग्रहाः सर्वे स्ववेचे शुभदा गृहे।

नीचगा न च नीचस्था न च तीक्ष्णांशुदूषिता ॥

सूर्यादिग्रहाणां स्वक्षेत्राणि, सूर्यस्य सिंह क्षेत्र, सोमस्य कर्क, भौमस्य मेष-वृश्चिकौ, बुधस्य मिथुन कन्ये, गुरोर्धनुर्मीनौ, शुक्रस्य वृष तुले शनैश्वरस्य मकर-कुम्भाविति।

तदुक्तं लघुजातके ।

कुज-शुक्र-बुधेन्द्वर्क ज्ञ शुक्र जीव कुज सौरि शनि गुरव मेषाद्यः इति।

एते क्रमेण मेषादीनां द्वादशानां राशीनां ईश्वरा इत्यर्थ ।

'कुज' मङ्गल, 'ज्ञ' बुध, 'जीव' गुरु, 'सौरि' शनैश्वर, 'भानि' राशय, इति ।

तथोच्च नीचञ्च परिभाषित जातके ।

अज-वृष-मृगाङ्गना-कर्क-मीन-वणिज्यांशा कथिता अर्कादुच्चा दश शिखि अष्टाविंशति तिथीन्द्रियसप्तविंशतिविंशतिरुच्चान्नीच सप्तमिति।

अस्यार्थ मेषस्याद्या दशत्रिंशांशा रवेरुच्च। वृषस्याद्यास्त्रयस्त्रिंशांशा सोमस्योच्च। मकराद्या अष्टाविंशतिस्त्रिंशांशा मङ्गलस्योच्च। एव कन्याया पञ्चदशत्रिंशांशा बुधस्योच्च। कर्कटस्य पञ्च गुरोरुच्च। मीनस्य सप्तविंशति शुक्रस्योच्च। तुलाया विंशति शनेरुच्च।

एतत्सर्वं समालोच्य विबुध्य निपुण सुधी ।

आरभेत प्रयत्नेन वास्तुकर्म सुसिद्धिद ॥

इति वास्तुप्रकरण ।

---

## अथ प्रतिष्ठाकालनिर्णयः ।

तत्र सामान्यत प्रतिष्ठाकालनिर्णय ।

विष्णुधर्मोत्तरे ।

वज्र उवाच ।

कस्मिन् काले तु कर्त्तव्या प्रतिष्ठा भृगुनन्दन ।

मार्कण्डेय उवाच ।

शृणु काल प्रवक्ष्यामि प्रतिष्ठाकरणे तव ।
यस्मिन् काले कृता या स्यात् फलसिद्धिप्रदायनी ॥
धन धान्यवती स्फीता वरदा च तदा भवेत् ।
दृढा भवति विख्याता चिदिवेशे गुरौ युते ॥
ऐन्द्रे तेजस्वती स्फीता भूतविग्रहकारिणी ।
तथाविधा तु सा स्फीता यदि दाहमवाप्नुयात् ॥
नित्यासूर्ययुता लाष्ट्रे गम्यलोके तथैव च ।
अहिर्बुध्ने तथा नित्य लोकानुग्रहकारिणी ॥
पित्र्ये विनाशमाप्नोति कर्त्तुश्च मरणावहा ।
सौम्ये सौम्या तथा कर्त्तुर्वरदा च तथा भवेत् ।
ऐन्द्राग्ने नाशमाप्नोति कर्त्तुं कृता विनाशन ॥
आश्विने श्रीमती भूत्वा तथा युक्तमवाप्नुयात् ।
लोकाभिगम्या भाग्ये स्यात् कर्त्तुर्भाग्यवती भवेत् ॥
अशुभेऽपि यदा कार्या प्रतिष्ठा मनुजोत्तम ।
यस्मिन् युगे तु यो नाथो यो यो देव प्रकीर्त्तित ।
धन धान्यवती स्फीता कर्त्तु श्रेयोजयावहा ॥

प्रभवादिभि पञ्चभि संवत्सरैर्विष्ण्वादीनि युगानि द्वादश तत्रै-वाभिहितानि ।

संवत्सराख्यवर्षेषु नित्यमाज्ञायुता भवेत् ।
परिपूर्वे तु भूतघ्नी लोकख्याता तथैव च ॥
इदापूर्वे तथा सौम्या वरदा लोकसुन्दरी ।
अनुपूर्वे तु वरदा धन-धान्यवती भवेत् ॥
इत्पूर्वे नाममाप्नोति कर्त्तुर्नाशवहा भवेत् ।
तत्रापि प्रभोर्नैत्यस्य समये रोहिता भवेत् ॥

प्रभवादयः पञ्च क्रमेण सवत्सर-परिवत्सरेदावत्सरानुवत्सरेद्वत्सर-संज्ञकाः एवमङ्गिरादिपञ्चकस्य क्रमेण संज्ञापञ्चकमेवमुत्तरत्रापीति तत्रैवाभिहितं ।

मत्स्यपुराणे ।

प्राप्य शुक्रं शुभं पचमतीते चोत्तरायणे ।

विष्णुधर्मोत्तरे ।

उत्तरे त्वयने सौम्या धनवृद्धिकरी भवेत् ।
तत्रापि सुप्ते देवेशे सर्वानर्थविवर्द्धनी ॥
शिशिरे लोककान्ता सा वृद्धा च वसुधाधिप ।
स्मीता वसन्ते सौम्या च वरदा च तथा भवेत् ॥
ग्रीष्मे तेजस्विनी कान्ता भूतनिग्रहकारिणी ।
प्रावृट्काले तथा नाश कर्त्रा सह समाप्नुयात् ॥

प्रावृट्कालनिषेधश्च शिवप्रतिष्ठाव्यतिरिक्तविषय, शिवप्रतिष्ठायां तद्विधेः शिवप्रतिष्ठाकालनिर्णये दर्शितत्वात् ।

शरत्काले तथा नाश शीघ्रमेव प्रपद्यते ।
हेमन्ते च सदा सौम्या धर्मवृद्धिकरी भवेत् ॥

माघे कर्त्तुर्विनाशाय फाल्गुने सुभगा भवेत् ।
लोकानन्दकरी चैत्रे वैशाखे धनसंयुता ॥
आरोग्यदा सदा ज्यैष्ठे आषाढ़े धर्मवृद्धिदा ।
श्रावणे धनहीना स्यात् भाद्रपादे विनश्यति ॥
आश्विने लाभमाप्नोति वह्निना कार्त्तिके तथा ।
सौम्ये सौभाग्यमतुलं पौषे पुष्टिरनुत्तमा ॥
दोषावहा तु माघे स्यात् कर्त्तुरात्मन एव च ।
चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा ।
माघे वा सर्व्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

अथ माघमासनिषेधो विष्णुप्रतिष्ठाविषय, विधिस्तु तद्व्यतिरिक्तदेवताप्रतिष्ठाविषय, मार्गशीर्षमासविधिश्च विष्णुप्रतिष्ठाव्यतिरिक्तविषय. मार्गशीर्षमासनिषेधस्य विष्णुप्रतिष्ठाकालनिर्णये दर्शितत्वात्। श्रावणाश्विनमासनिषेधस्य विष्णुप्रतिष्ठाव्यतिरिक्तविषयः विष्णुप्रतिष्ठायामेतद्द्वयविधेस्तत्रैव दर्शितत्वात् ।

अपरे त्वाहु. "माघमासे सर्व्वदेवानामितिवचनात् विष्णुप्रतिष्ठापि तत्र कार्य्या माघमासादिनिषेधस्तु तत्तदन्यविषयतत्तत्प्रतिष्ठाविषयविशेषे ।

द्वितीये मध्यफलदा तृतीये च शुभप्रदा ।
धन-धान्यवती स्फीता वरदा च तथा भवेत् ।
यस्य पक्षस्य वृद्धिः स्यात् तस्मिन् शुभफलप्रदा[१] ॥
द्वितीयायां धनोपेता तृतीयायां वरप्रदा ।

(१) शुभफला भवेदिति ख० ।

चतुर्थ्यां नाशमाप्नोति यमस्य स्यात्सुखावहा ॥
विनायकस्य देवस्य तथा तत्र हितप्रदा ।
पञ्चम्यां श्रीयुता कर्तुर्वरदा च तथा भवेत् ॥
षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां रोगनाशिनी ।
अष्टम्यां धान्यवञ्चला नवम्यां तु विनश्यति ॥
भद्रकाख्याः कृता तत्र कर्तुर्भवति पुष्टिदा ।
धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा कृता ॥
एकादश्यां तथा युक्ता द्वादश्यां सर्वकामदा ।
त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति ॥
कृष्णपक्षे पञ्चदश्यां कर्तुः क्षयकरी भवेत् ।
पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत् ॥
त्रस्तत्तृषा च विज्ञेया तथा दोषवती नृप ।
दिव्यन्तरीक्षे भूमौ च उत्पातेन तु या युता ॥
कर्तुर्व्याधिप्रदा तत्र प्रतिष्ठा तु क्रिया भवेत् ।
तिथिहानौ त्रयोज्ञेयो वृद्धौ वृद्धिः प्रकीर्त्तिता ॥
मत्स्यपुराणे ।

पञ्चमी च द्वितीया च तृतीया चाष्टमी तथा ।
दशमी पौर्णमासी च कृता तु फलदा भवेत् ॥
लवणसमुच्चये ।

तासु पक्षे सिते कार्या द्वितीया वै तिथिस्त्वथ ।
द्वितीयायुर्मतिं दद्यात्तृतीया पुत्तसम्पदम् ॥
पञ्चमी च श्रियं नित्यं सप्तमी रोगनाशनम् ।

दशमी भूमिवृद्धिञ्च सौभाग्यञ्च चयोदशी ॥
नानाविधं धनं नूनं पौर्णमासी तिथिः सदा ।
एकविंशकरैर्नन्दा भद्रा पञ्चर्षिभानुभिः ॥
जया हि रामाद्दिकामैः रिक्ता वेद-यडेन्द्रियैः ।
वाण-दिक्तिथिभिः पूर्णा हीनतुल्या स्थिता क्रमात् ॥
एते शुक्लेऽनुलोमाः स्युर्बहुले च विलोमतः ।
वृहस्पतिर्दयं चायुर्बुधोजय-धनानि च ॥
सर्वे घ्नार्कः शुभः शुक्रश्चन्द्रः शान्तिप्ररोहणे ।
कर्कीवृषतुलाचार्य्यश्रीमिथुनामयुग्मके ॥
स्वस्थे घटालिमेषस्था निर्दिष्टानां प्रधानता ।
यडष्टचतुराद्यायामाद्यद्वादशिक्रमेण तु ॥

विष्णुधर्मोत्तरे ।

तेजस्विनी सूर्य्यदिने चन्द्रे क्षेमावहा भवेत् ।
भौमेऽग्निना प्रदह्येत बुधेन धनदा भवेत् ॥
गुरुणि स्याद्गुरुदे नित्यं लोकानन्दकरी सिते ।
आचन्द्रार्कस्थिता सौरे प्रतिष्ठा समुदाहृता ॥

मत्स्यपुराणे ।

बुधोवृहस्पतिः शुक्रस्त्रयोवाराः शुभावहाः ।
एभिर्निरीक्षितं लग्नं नक्षत्रञ्च प्रशस्यते ॥

समुच्चयलक्षणे ।

प्रीतिः सौभाग्यमायुष्मान्सुकर्मा शोभनो धृतिः ।
वृद्धिः सिद्धिः शुभः साध्योवरीयाञ्छिव-शुक्लकौ ।

ब्रह्मैन्द्रौ च शिवं चेति योगाः तत्संज्ञकाः शुभा ॥
बवश्च बालवश्चैव कौलव तैतिलं तथा।
गरश्च वणिजश्चैव शकुनिश्च चतुष्पद।
नागं किन्तुघ्नमप्याहु विष्टिहीनन्तु पञ्चयोः ॥

विष्णुधर्म्मोत्तरे।

शकुनौ दोषजननी चतुष्पदे भयावहा।
नागे भवति सौम्या च किन्तुघ्ने च शुभप्रदा ॥
कौलवे वरदा ज्ञेया तैतिले रोगनाशिनी।
गराख्ये रोगजननी तथा वणिजि पुष्टिदा।
विष्टौ मरणदा कर्तृगतदोषवती सदा ॥

मात्स्ये।

आषाढे द्वे तथा मूलमुत्तरात्रयमेव च।
ज्येष्ठा श्रवण-रोहिण्यः पूर्वाभाद्रपदा तथा ॥
हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा।
अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ॥

लक्षणसमुच्चये।

पुष्यशुक्रोहिणीकामभद्रा मगाढोत्तरा द्विजे।
पुनर्वस्वनुराधास्तु चित्रा ज्येष्ठा महीभुजि ॥
धनिष्ठा श्रवणौ वैश्ये युगे भाद्रपदे तथा।
अश्विनी रेवती भद्रे स्वाति-फाल्गुनिकाद्वयम् ॥
चतुर्वर्णमघा स्मोदा मूलार्द्रा भरणी तथा।
एतानि प्रतिलोमानां चतुर्थीशान्त्यजे तथा ॥

जय-रोगकरा शिष्टा रोहिणी भयवृद्धिदा ।
हस्तः सिद्धिप्रदोऽश्विन्या आयुर्दा पादयुग्मके ॥
पुनर्वसु सुखं दद्यादनुराधा तु सम्पदः ।
चित्रा सर्वसुखं नित्यं ज्येष्ठा रोगविनाशकृत् ॥
धनिष्ठारिजयं दद्यात् ज्ञानदं श्रवणं सदा ।
युग्मभाद्रपदा वृद्धिर्यज्ञमिषाणि चाश्विनी ॥
रेवती पुष्टिदा नित्य स्वाती कुर्य्याद्धनं बहु ।
फाल्गुनीद्वितय वृद्धिर्भरणी रिपुभेदनम् ॥
आर्द्रा सौभाग्यसम्पत्तिर्मूलेऽथ नृपसत्क्रिया ।
मृग शान्तिप्रदो नित्य धन्या शतभिष त्यजेत् ।
अश्लेषा कृत्तिका चैव विशाखा च शुभप्रदा ॥

विष्णुधर्मोत्तरे ।

तेजस्विनी कृत्तिका च भूतनियन्तृकारिणी ।
किञ्चिन्मूला तत्र काले न सदर्पितवह्निका ॥
वह्नेः सूर्य्यस्य सोमस्य कुमारस्य च सा वरा ।
गङ्गायाश्च कृतास्तत्र न दहन्ति च वह्निना ॥
प्राजापत्ये गृहे नित्यं लोकानुग्रहकारिणी ।
सौम्ये तु वरदा प्रोक्ता सूपकेन्द्र विनश्यति ॥
आर्द्रायां कर्द्दमरण चिप्रमेव प्रयच्छति ।
पुनर्वसौ विनाशस्य सत्कारस्याशुयात्पुनः ॥
पुष्टिं पुष्ये समाप्नोति धनेन यशसा तथा ।
सापि कर्द्धविनाशाय नागाना नाशकृद्भवेत् ॥

पित्रोर्मरणदा कर्तुस्तथा नाशञ्च गच्छति ।
लोकगम्या भवेद्वाग्ये कर्तुर्नाशवहा तथा ॥
तत्रापि कामदेवस्य कर्तुं सौख्यवहा तथा ।
अर्यम्णे सुदृशा स्फीता लोकानुग्रहकारिणी ॥
आयुर्दा च कृता हस्ते चित्रायां नाशमाप्नुयात् ।
नित्यैश्वर्य्ययुता लोके चित्रायाञ्च हितप्रदा ॥
स्वातौ तु वरदा सौम्या लोकानुग्रहकारिणी ।
ऐन्द्राग्ने कर्तृनाशाय मैत्रे मित्रविवृद्धये ॥
ज्येष्ठायां तेजसा युक्ता धन-धान्यवती भवेत् ।
तथाविधा तथा मूले किन्तु भूतसमाश्रया ॥
आद्ये क्लेदमवाप्नोति वैश्वदेवे सुखप्रदा ।
श्रवणे धन-धान्याढ्या वासवे वसुसंयुता ॥
वारुणे शीघ्रनाशाय तथाप्ये मनुजोत्तम ।
अहिर्बुध्न्ये दृढा स्फीता कर्तुं सौख्यप्रदायिनी ॥
धन-धान्ययुता पौष्णे आश्विने योगगामिनी ।
याम्ये मरणदा कर्तुरात्मनाशकरी तथा ॥
मार्के स्वाच्छोकजननी सशौरे ह्यायुदायिनी ।
सभौमे वह्निभयदा सतमस्के स्थिरा न तु ॥
केतुना धूमिते चन्द्रे वह्निदाहमवाप्नुयात् ।
केतूदये भवेद्येन तेन दुर्भिक्षमाप्नुयात् ॥
भौमोदये भवेद्येन तेन दह्येत वह्निना ।
शौरोदये भवेद्येन तेन कर्त्ता विनश्यति ॥

नक्षत्रे सपरीवेषे परचक्रभयं भवेत् ।
उल्काहते विनाशाय सभूकम्पभयप्रदा ॥
उल्कापातो भवेद्यत्र तत्र व्याधिकरी भवेत् ।
त्रिविधोत्पातयुक्ते भे न शुभा परिकीर्त्तिता ॥
दिव्यकीर्त्तिविनाशाय भौमे चात्मविनाशिनी ।
अन्तरीक्षे च विज्ञेया लोकनाशकरी तथा ॥
सर्वेषूत्पातपातमृक्षमेकं विवर्जयेत् ।
शेषैर्दोषैस्तथायुक्ता यावदागमनादृवे ॥
जन्मनक्षत्रविहिता कर्त्तुं श्रेयस्करी भवेत् ।
सम्पत्करी द्वितीये स्यात्तृतीयेऽरिभयप्रदा ॥
क्षेम्या चतुर्थे भवति पञ्चमे व्याधिवर्द्धिनी ।
कार्य्यवृद्धिकरी षष्ठे सप्तमे निधनप्रदा ॥
अष्टमे वरदा सौम्या नवमे श्रीविवर्द्धिनी ।
कर्म्मणा साधिका प्रोक्ता जन्माद्दे दशमे शुभा ॥
एकादशे शुभकरी द्वादशेऽरिभयप्रदा ।
ज्ञेया त्रयोदशे क्षेम्या रोगदा च चतुर्दशे ॥
ऋद्धिदा पञ्चदशके षोडशे निधनप्रदा ।
सप्तदशे भूतिकरी नन्दा(१) चाष्टादशे भवेत् ॥
एकोनविंशतितमे कर्त्तुर्मरणदायिनी ।
तथा द्वितीये धनदा तृतीयेऽरिभयप्रदा ॥
चतुर्थे क्षेमजननी पञ्चमे रोगवर्द्धिनी ।

(१) नन्दयतीति नन्दा सुखदेति यावत् ।

षष्ठे लक्ष्मीकरी ज्ञेया धन धान्यविवर्द्धिनी ॥
द्वितीये च चतुर्थे च पञ्चमे च तथाष्टमे ।
द्वादशे नवमे चन्द्रे कर्त्तुर्दोषवती भवेत् ॥
जन्मस्थस्तृतीयश्च षष्ठश्चैकादशस्तथा ।
दशम सप्तमश्चैव यदा विद्धो भवेद्‌ग्रहै ॥
पञ्चमैर्नवमैश्चैव द्वादशैर्वा तथाष्टमे ।
चतुर्थे वा तृतीये वा क्रमात्पापात्फल लभेत् ॥
विपर्य्ययेण वेधश्चेत्पापोऽपि शुभकृत्स्मृत ।
चन्द्राद्द्वादशके सूर्य्ये द्वितीये वा भयप्रदा ॥
द्वादशे वा द्वितीये वा भौमे दाहमवाप्नुयात् ।
द्वादशे वा द्वितीये वा सौरे मरणदा भवेत् ॥
पापमध्यगते चन्द्रे ध्रुव मरणदा भवेत् ।
एकस्मिस्तु यदा केन्द्रे चन्द्रमाश्च व्यवस्थित ॥
केन्द्रत्रयमथान्यत्स्याद्युक्त सूर्य्यारसूर्य्यजै ।
तदा कर्त्तुर्विनाशाय प्रतिष्ठा खचराधिप ॥
चन्द्रे सार्के विनाशाय भौमे दाहमवाप्नुयात् ।
शनौरे मृत्युदा ज्ञेया शरादौ निधनप्रदा ॥
नक्षत्रे क्षोपरागे तु कर्त्तुर्मरणदायिनी ।
परिस्पृष्टे[1] तथा चन्द्रे तथा ज्येष्ठान्त्यपादगे ।
पौष्णाद्यपादगे चैव कर्त्तुर्निधनकारिणी ॥

---

(१) पाठोऽयं आदर्शानुरूप एव सन्निवेशितः परन्त्वयं न समीचीनो विभाति, परिपुष्टे इत्ययं पाठो भवितुमर्हति ।

लक्षणसमुच्चये ।

शशीजीवो नव-द्वीषु-सप्तस्थानेषु सर्वदा ।
बुधः षडष्ट-तुर्येषु दिक्सप्त-नवराशितः ॥
सप्त-त्रि षष्ठ दशमः शशी शुभफलप्रदः ।
रविर्दश-त्रिषट्स्थो राहुस्त्रि दशषङ्गतः ॥
त्रि-षट्स्थानगताः शस्ता मन्दाङ्गारक-केतवः ।
शुभाः क्रूराः सपापाश्च सर्वे एकादशास्तथा ॥
एषां दृष्टिर्मुनौ पूर्णा वाह्निकी सह-भूतयोः ।
पादिकौ रामदिक्स्थाने वस्वब्ध्योः पादवर्जिता ॥
द्वितीया सम्पदाख्या तु चतुर्थी क्षेमसंज्ञका ।
षष्ठी च साधिका तारा अष्टमी शत्रुनाशिका ।
नवमी चातिमित्रा स्यादेताः पञ्च फलप्रदाः ॥

विष्णुधर्मोत्तरे ।

जन्मराश्युदयेकर्तुं क्षिप्रं नाशकरी भवेत् ।
द्वितीये धननाशाय तृतीये कर्ववृद्धिदा ॥
चतुर्थे सुहृन्नाशाय पञ्चमे व्याधिदा भवेत् ।
षष्ठे शत्रुविनाशाय सप्तमे धननाशिनी ॥
अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशिनी ।
दशमे कर्मणा वृद्धौ लाभे लाभकरी भवेत् ॥
द्वादशे तु व्ययाय स्यात् प्रतिष्ठा तु तथा स्मृता ।
जन्मलग्नोदये श्रेष्ठा धन-धान्यवती भवेत् ॥
जन्मराशिफलं शेष सर्वस्थानेषु निर्दिशेत् ।

मेषोदये कृता क्षिप्रं नाशमाप्नोति पार्थिव॥
वृषोदये स्थिरा प्रोक्ता धन-धान्यवती भवेत्।
लोककान्ता च मिथुने बहुकल्याणकारिणी॥
कुलीरे क्षिप्रं नाशः स्यात् सिंहे च सुदृढा भवेत्।
कन्यायां लोककान्ता स्यात्तुलायां भवति स्थिरा॥
वृश्चिके तु स्थिरा प्रोक्ता कल्याणाय धनुर्धरे।
मकरे क्षिप्रं नाशः स्यात् कुम्भे लग्ने दृढा भवेत्॥
मीने गुणवहा कर्त्तुः कल्ये[१] शून्या तथा भवेत्।
उग्रा स्यात् सूर्यदाभायां[२] सौम्या सौम्यस्य कीर्त्तिता॥
पापग्रहस्य केन्द्रेण कर्त्तुर्नाशाय कीर्त्तिता।
सौम्या घटस्य सुशुभं कर्त्तुर्भवति वृद्धिदा॥
फलं यदेव लग्नेषु नवांशेषु तदेव तु।
द्वादशांशेषु विज्ञेयं तदेव मनुजोत्तम॥
कर्त्तुर्नाशाय विज्ञेया त्रिंशांशे सोम-सूर्ययोः।
शतं जीवेत् प्रपौत्राणां[३] कर्त्तुः कल्याणदा भवेत्॥
शुभसंज्ञे महाराज लग्ने पापफले शुभं।
लग्ने शुभतरे प्राप्ते पापसंज्ञमशोधनं॥
लग्नस्थे शोकदा कर्त्तुः कृता भवति भास्करे।

(१) लग्नविशेषे इत्यर्थः।
(२) सूर्यदाभायामित्ययं पाठ आदर्शपुस्तकेष्वेकरूप एव वर्त्तते परन्त्वयं न समीचीनो विभाति।
(३) प्रपौत्राणां शतं जीवेदित्यन्वयः।

द्वितीयेऽर्थस्य हानिः स्यात् तृतीये धनसंयुता ॥
आयुःक्षयश्चतुर्थे स्यात् पञ्चमे सुतनाशनं ।
षष्ठे शत्रुविघातस्तु दारिद्र्य सप्तमे भवेत् ॥
मरणं चाष्टमे मासौ नवमे धर्मपीड़नं ।
दशमे सुतवृद्धिश्च लाभे लाभयुता भवेत् ॥
द्वादशे व्ययसंयुक्ता निर्धना तु तथा भवेत् ।
चन्द्रे लग्नगते ज्ञेया सुदृढा मनुजोत्तम ॥
धनान्विता द्वितीये तु तृतीये लाभसंयुता ।
चतुर्थे बान्धवद्विता पञ्चमे सुतवृद्धिदा ॥
षष्ठे रिपुविनाशाय सप्तमे च धनावहा ।
अष्टमे मरणायोक्ता नवमे धर्मपीडनं ॥
दशमे धर्मदा प्रोक्ता लाभे लाभप्रदा भवेत् ।
व्यये व्ययवती राजंस्तथा धनविवर्जिता ॥
अर्द्धबिम्बाधिके चन्द्रे शुभपक्षफलं भवेत् ।
अर्द्धबिम्बाधिके क्षीणे क्रमादथ निबोध मे ॥
चन्द्रे लग्नगते ज्ञेया क्षिप्रं नाशो महीभुजां ।
द्वितीये च दरिद्रा स्यात् तृतीये धनसंयुता ॥
बहुधान्यं चतुर्थे स्यात् पुत्त्रनाशाय पञ्चमे ।
षष्ठे रिपुविनाशाय भार्यानाशाय सप्तमे ॥
अष्टमे मरणायोक्ता नवमे धर्मघातिनी ।
धनान्विता स्याद्दशमे लाभे लाभवती भवेत् ॥
व्यये व्ययवती नित्यं दरिद्रा च तथा भवेत् ।

लग्ने मृत्युकरा भौमे तथा दारिद्र्यदा धने ॥
कीर्त्तिं त्रिभुवने शुभ्रां तृतीयस्थः करोत्यसौ।
चतुर्थे बन्धुनाशः स्यात् सुतनाशस्तथा सुते ॥
अरिनाशस्तथा षष्ठे सप्तमेऽसौ विनश्यति।
अष्टमे कष्टमरणं नवमे दशनच्युतिः ॥
दशमे कर्मसिद्धिः स्यात् लाभे लाभवती भवेत्।
आयात्मजसप्तस्तयो व्यये धुर्व्ययदः सदा ॥
बुधलग्ने धनयुता द्वितीये च तथा भवेत्।
तृतीये वरदा प्रोक्ता चतुर्थे धनसंयुता ॥
कीर्त्तिश्च पञ्चमे ज्ञेया षष्ठे रिपुविनाशिनी।
सुखदा सप्तमे ज्ञेया हर्षदा च तथाष्टमे ॥
सौख्यदा नवमे राजन् दशमे कर्मवृद्धिदा।
स्थिरलाभगते ज्ञेया व्ययगे धनसंयुता ॥
जीवे धनाढ्या लग्नस्थे द्वितीये च तथा भवेत्।
वृद्धासदा तृतीये स्यात् चतुर्थे धनसंयुता ॥
पञ्चमे सुतदा प्रोक्ता षष्ठे शत्रुविनाशिनी।
सप्तमे राज्यदा कर्त्तुरष्टमे च समृद्धिदा ॥
कीर्त्तिदा नवमे ज्ञेया दशमेऽसमवृद्धिदा।
लाभस्थे लाभदा ज्ञेया व्यये लाभसमन्विता ॥
लग्नस्थे निश्चला शुक्रे सर्वकामप्रदा भवेत्।
धनगे च धनं दद्यात् तृतीये भ्रातृवर्द्धिनी ॥
चतुर्थे सुभगा ज्ञेया पञ्चमे सुतवृद्धिदा।

षष्ठे पूज्या तथा शुक्रे सप्तमे धनवृद्धिदा।
अष्टमे सुखदा प्रोक्ता नवमे च सुखार्थदा[१]॥
दशमे लोककान्ता स्यादरिनाशस्तथायगे।
तथा व्ययस्थे विशेषा मध्ये सधना तथा॥
मृत्युदा लग्नगे सौरे दरिद्रा स्याद्द्वितीयगे।
तृतीये धनलाभाय चतुर्थे कर्ममृत्युदा॥
सुतगे सुतनाशः स्यादरिनाशस्तथारिगे।
जायानाशस्तु जायास्थे मृत्युर्मृत्युपदोपगे॥
धर्मगे धर्महानिः स्यात् कर्महानिस्तु कर्मगे।
महालाभस्तु लाभस्थे व्ययगे च व्ययो भवेत्॥
शून्यं विवर्जयेत् केन्द्रे तत्तथैव नियोजयेत्।
एवं ज्ञात्वा शुभं कालं प्रयत्नेन सुदैववित्।
कुर्यात् प्रतिष्ठां यत्नेन गृह्णीयादवधानतः॥
शुभेऽह्नि पूर्वं यत्नस्थां तत्कालप्रतिमाञ्च यां।
समाहृपीठिकां गर्त्ते स्थापितां विनिवेशयेत्।
तत्कालमेवं कुर्वीत नामावाप्तां समाहितः॥

लक्षणसमुच्चये।

पादादूनचतुर्नाडीभागः स्यान्मीन-मेषयोः।
वृष-कुम्भौ च युञ्जानौ चतस्रः पादवर्जिताः॥
मकरे मिथुने चैव चापालि-हरि-कर्कटाः।

---

(१) सुखप्रदेति ख०।

पादोना' पट्पलाः कन्ये घटिकाः सार्द्धपञ्च तु ॥
केसरी च वृषः कुम्भ' स्थिराः स्युः सिद्धिदायकाः ।
चरं धनुस्तुला मेषाद्र्द्वयुग्मं मीन-कन्यके ।
कर्कटे कर्कटालिश्च प्रवज्याः कार्यनाशकाः ॥
स्थिरः शुभग्रहैर्दृष्टः शस्तोलग्नः शुभान्वितः ।
गुरु-शुक्र बुधैर्युक्ते लग्ने दद्यात्सुनायुषी ॥
राज्यं सौख्यं बलं पुंसां देशधर्मादिकं बहु ।
प्रथमं सप्तमस्तुर्या दशमः केन्द्र उच्यते ।
गुरु-शुक्र-बुधास्तत्र सर्वसिद्धिप्रदायकाः ॥
व्येकादश-चतुर्थस्था लग्नात् पापाः शुभग्रहाः ।
अतोऽन्येऽनिष्टकर्माय योज्यास्त्रियादयो बुधैः ॥
सुयोगे शाश्वता धर्माः स्थिरायां पुष्टि-जीवितं ।
सुलग्ने च महाभागो विषुवे चेप्सितं फल ॥
मडशीतिमुखे पुण्ये अयने च महातिथौ ।
ऋद्धिरारोग्यमैश्वर्यं देवस्थापनतो भवेत् ॥
सन्ध्यागते तु लग्ने च ग्रहयस्तमितदुर्ग्रहे ।
दुष्टग्रहे दुष्टलग्ने नवचेऽशुभसंयुते ॥
दुर्निमित्ते तथोत्पाते चन्द्र-सूर्योपमर्दने ।
एतेषु स्थापिता देवाः भय-दुर्भिक्ष-रोगदा' ।
तस्मादिन निरीक्ष्यादौ सर्वोपस्करमाहरेत् ॥

मत्स्यपुराणे ।

ग्रह-ताराबलं बुध्वा ग्रहपूजां विधाय च ।

निमित्तं शकुनं लब्ध्वा वर्जयित्वा ग्रहादिकं ॥
शुभकाले शुभस्थाने क्रूरग्रहविवर्जिते ।
लग्ने चन्द्रे च कुर्वीत प्रतिष्ठादिगुणान्वितं ॥
अयने विषुवे तद्वत् षडशीतिमुखे तथा ।
एतेषु स्नापनं कुर्याद्विधिदृष्टेन कर्मणा ॥

विष्णुधर्मोत्तरे ।

यस्मिन् चन्द्रे यद्देवोक्तं फलं भूपतिसत्तम ।
तद्देवेन फलं प्रोक्तं तन्मुहूर्त्तेऽपि यादव ॥
रौद्रः सार्पस्तथा मैत्रः पैत्रोवासव एव च ।
आप्यो वैश्वस्तथा ब्राह्म्यः कैरवः शक्रदेवतः ॥
ऐन्द्राग्नेयोनैर्ऋतश्च वारुणश्च महीपते ।
अर्यमश्च तथाभाग्यो मुहूर्त्तास्तु दिवाकरः ॥
रौद्रोऽजपादहिर्बुध्नः पौष्ण आश्विन एव च ।
याम्योऽग्निदेवतश्चैव ब्राह्मः सौम्यस्तथैव च ॥
आदित्यो जीवदैवत्यो वैष्णवः सूर्यदेवतः ।
त्वाष्ट्रश्चैवाथ वायव्यो मुहूर्त्ता रात्रिचारिणः ॥

तथा ।

दिनमध्यगते सूर्ये मुहूर्त्तेऽभिजिदष्टमे ।
सर्वकामसमृद्धः स्यात् सर्वोपद्रववर्जितः ॥

मत्स्यपुराणे ।

प्राजापत्ये तु शयने ब्राह्मे चोत्थापनं भवेत् ।
मुहूर्त्ते स्नापनं कुर्यात् तेन ब्राह्मे विचक्षणः ॥

विष्णुधर्मोत्तरे ।

गुरावस्तमये प्राप्ते नीचस्थे कर्त्तृघातिनी ।
तथादृढलग्ने सौवे तु धन धान्यकरी भवेत् ॥
ब्राह्मे रौद्रे दृढा ज्ञेया प्राजापत्ये सुखावहा ।
स्वर्गलोकप्रदा स्वर्गे चक्रे चक्रप्रवर्त्तिनी ॥
धानसत्ये तु वरदा आन्ये धान्यविवर्द्धिनी ।
वाये भवति वस्त्राढ्या काले मृत्युप्रदायिनी ॥
आग्नेये दाहमाप्नोति क्षौवमन्द्दैवते तथा ।
सौरे भवति सुस्फीता चान्द्रे च वरदा तथा ॥
मध्यते मार्यदैवत्ये गोदेवे वृद्धिमाप्नुयात् ।
पैत्रे च पुष्टिदा प्रोक्ता तथा भवति पूजिता ॥
कौमारे वृद्धिमाप्नोति पित्र्ये नाश तथैव च ।
वारुणे रोगदा प्रोक्ता शुभा चानन्तदैवते ॥
चपला वनदैवत्ये याम्ये मृत्युप्रदा भवेत् ।
वाग्दैवत्ये प्रदा वाग्मी श्रौते च श्रीयुता भवेत् ॥
धनगे धनसंयुक्ता सुदृढ शैलदैवते ॥
पृथ्वीदेवे दृढा सौम्या शुभा खादेद्देवते ।
पौरुषे च तथा रोषे बहुधर्मविवर्द्धिनी ।
कर्त्तुं सुखावहा चैव तथा लाङ्गयुता भवेत् ॥

इति सामान्यप्रतिष्ठा ।

---

## अथ शिवप्रतिष्ठा।

अथ लक्षणसमुच्चये।

उत्तरायणगते भानौ लिङ्गस्थापनमुत्तमं।
दक्षिणे त्वयने पूर्व्वं विपर्य्यये भयावहं॥
मयहं स्थापनं नेष्टं तथा वै दक्षिणायने।
मयहे स्थापिते लिङ्गे व्याधिना पीड्यते प्रजा॥
कुमाराः सम्प्रपीड्यन्ते कन्यानाशश्च जायते।
सुमहांश्चलस्त्वोपस्य तदा राज्ञां प्रजायते॥
कर्त्तुः क्षयः सदा शोको दृष्टे भवति दारुणः।
तस्माच्च स्थापयेद्देवं मयहे दक्षिणायने॥
स्थापनन्तु प्रकर्त्तव्यं शिशिरादावृतुत्रये।
प्रावृषि स्थापितं लिङ्गं भवेदरदयोगदं॥
हेमन्ते ज्ञानदं लिङ्गं शिशिरे सर्वभूतिदं।
लक्ष्मीप्रदं वसन्ते च ग्रीष्मे च जय-शान्तिदं।
यतीनां सर्वकाले च लिङ्गस्थारोपणं मतं॥

रत्नावल्यां।

माघ-फाल्गुन-वैशाख-ज्यैष्ठाषाढेषु पञ्चसु।
मासेषु शुक्लपक्षेषु सदुष्टपक्षवर्जिते॥
द्वितीया पञ्चमी षष्ठी सप्तमी नवमी तथा।
द्वादश्येकादशी शस्ता पूर्णिमा च त्रयोदशी॥
गुरु शुक्रो बुध सोमोवारश्चेत्तु शुभावहः।

आर्द्रा शतभिषा स्वाती रोहिणी श्रवण द्वय ॥
पूर्वाषाढोत्तराषाढा ज्येष्ठाश्लिषा च रेवती ।
चित्रा-हस्तौ धनिष्ठा स्यादनुराधा च सिद्धिदा ॥

लक्षणसमुच्चये ।

नक्षत्रे यत्र तत्रापि सर्वकाल द्विपक्षयो ।
लिङ्गस्य स्थापन शस्त यते कामार्थिनो ध्रुव ॥

रत्नावल्या ।

सौभाग्य शोभनायुष्मान सिद्ध साध्य शिव शुभ ।
वृद्धि प्रीतिर्धृति सिद्धि ध्रुव शुक्ल सुशोभनम् ॥
ववश्च बालवश्चैव कौलवस्तैतिल शुभम् ।
मैत्र परममैत्रञ्च अमृतश्च यथा शुभम् ॥
लग्नश्च वृश्चिक सिंहो मेषोमिथुन कर्कटौ ।
तथा कन्या तुला कुम्भौ वृषभश्च प्रशस्यते ॥
रविहस्ते भवेत्सिद्धि सोमे मृगशिरस्तथा ।
कृत्तिका भौमवारे स्यादनुराधा बुधे यदा ॥
रेवती भृगुअष्पश्चा शुक्रवारे पुनर्वसु ।
श्रवण शनिवारे च सिद्धियोगा शुभा मता ॥
जन्मभमष्टमयोऽथ षटपञ्चैकादशा शुभा ।
भौम मन्दौ तृपस्तौ च द्वि-सप्ताङ्क शरैर्गुरु ॥
जन्म-तुर्य-रसाष्टम्यो दशमस्य शुभो बुध ।
रस-सप्त दशान्यस्य शुक्रश्चाथ प्रयत्नत ॥
चेत्रमध्ये यदा सर्वं यमकाष्ठेति निश्चिता ।

यस्मात्ते सर्वकार्य्येशास्तस्मात्तेष्वभियोजयेत् ॥
क्षीणचन्द्रस्तथा मन्दः(१) कुजार्कौ तैर्युतो बुधः ।
पापाः पापाश्रया यस्मात्तस्मात्तांश्च विवर्जयेत् ॥
केन्द्रस्थे च गुरौ शुक्रे न लग्नेन्दोर्यदा ग्रहाः ।
नष्टचन्द्रे तथा शुक्रे गुरावस्तं गते सति ।
प्रतिष्ठादिशुभारम्भान् दूरयात्रां विवर्जयेत् ॥
अन्यद्बहुतरं यत्तत् ज्योतिःशास्त्रविशारदः ।
समालोच्य नियुञ्जीत सर्वसाध्यान्यथाचरेत् ॥

लक्षणसमुच्चये ।

सुदिने शुक्लपक्षे च रविवारर्क्षभूषिते ।
सुचन्द्रतारकायोगे सुलग्ने करणान्विते ॥
द्वैते द्वैवे प्रतिष्ठा स्यान्मिश्रे च सितपक्षके ।
अद्वैते चैव कृष्णेऽपि मन्त्र-मूर्त्तिप्रभेदतः ॥
द्वैता पिङ्गाग्निकी रौद्री शतं वर्षाणि तिष्ठति ।
पद्मराची चरेन्मिश्रा पञ्चशोवर्षसंस्थितिः ॥
अद्वैता भैरवी सा तु वाम-दक्षिणमन्त्रजा ।
शताद्धार्द्धन्तु सा तिष्ठेत् बाणलिङ्गस्वयम्भुवा ॥

इति शिवप्रतिष्ठा ।

---

(१) शिष्ट इति क० ।

## अथ विष्णुप्रतिष्ठा ।

वैखानससंहितायां ।

अयने चोत्तरे कुर्याद्दक्षिणे वा नराम्बितम् ।

देवीपुराणे वैखानससंहितायां ।

मार्गशीर्षक-माघौ द्वौ निन्दितौ ब्रह्मणा पुरा ।
माघेषु फाल्गुन श्रेष्ठ चैत्रो वैशाख एव च ।
तैषेऽप्याषाढपुष्यासे श्रावणे मासि वा भवेत् ॥

तत्त्वसारसंहितायां ।

प्रतिष्ठार्चार्थिभिः प्रोक्ता या क्रमाद्वच्यतेऽथ ता ।
प्रतिपच्च द्वितीया च नवमी च चयोदशी ।
दशमी द्वादशी पूर्णे शुक्लपक्षे शुभान्विता ॥

महापञ्चरात्रे ।

पौर्णमास्या चयोदश्यां द्वादश्यां शुक्लपक्षत ।
प्रतिपद्द्वितीययोर्वा पञ्चम्या दशम्यामपि ।
भक्तिनास्तिथयश्चैता चन्द्रयोग प्रशुष्व मे ॥

वैखानससंहितायां ।

श्रवणे चैव रोहिण्या स्वात्यां हस्ते पुनर्वसौ ।
त्रिषूत्तरेषु रेवत्यां श्रविष्ठे वारुणे तथा ॥
सौम्य ताष्ट्रानुराधासु तिष्ये चैव विशेषत ।
अन्यस्मिन् सुप्रशस्ते वा यथोक्तगुणसंयुते ॥
अश्विनी-रोहिणीयोगे पुनर्वसौ च सुव्रत ।

भरण्यां श्रवणे हस्ते रेवत्यामुत्तरासु च।
त्रिषु नक्षत्रयोगेषु क्रमेणैव प्रतिष्ठापने॥

नारदसंहितायां।

सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा।
एते सौम्या ग्रहाः प्रोक्ताः प्रतिष्ठा-योगकर्म्मणि॥

'ग्रहाः' वाराः। 'सौम्याः' अनुकूलाः।

मत्स्यपुराणे।

सौम्यपक्षे प्रशस्तदिने सोम-भार्गववासरे।
शुभयोग एव भवेत्प्रतिष्ठा-यज्ञकर्म्मणि॥

वैखानससंहितायां नृसिंहपुराणे।

पूर्व्वपक्षे शुभे काले स्थिरे चोर्द्ध्वमुखेऽपि भे।
अनुकूले च लग्ने च हरिः स्थाप्योनरैस्तथा॥
नक्षत्रे च तिथौ युग्मे प्रशस्ते विष्टिवर्ज्जिते।
गुरु-शुक्र-बुधेन्दूनां एकवारयुते शुभे॥
पापग्रह यजमानस्याप्यनुकूलेऽपि तत्र वै।
चरराशिं विवर्ज्याथ स्थिरराशिं प्रगृह्य च।
सुप्रशस्ते मुहूर्त्ते वै प्रतिष्ठां कारयेद्बुधः॥

पञ्चरात्रसमुच्चये।

शुभदिने सितपक्षे च सुरवारर्क्षभूषिते।
शुभनक्षत्रतारकायोगे शुभयोगे करणान्विते॥
दैते दैवे प्रतिष्ठा स्यान्मिश्रे च सितपक्षके।
अदैवे चैव कृष्णे च मन्त्र-मूर्त्तिप्रभेदतः॥

द्वैता सिद्धान्तिकी रौद्री शतवर्षाणि तिष्ठति ।
पञ्चरात्री हरेर्मिश्रा पञ्चशीर्षसंस्थितिः ।
अद्वैता भैरवी सा तु वाम-दक्षिणमन्त्रजा ॥

मधूककाष्ठप्रतिमाप्रतिष्ठाकृत्य वाराहपुराणे ।
शुक्लपक्षे तु द्वादश्यां नक्षत्रे रैवते तथा ।
तत्र संस्थापनं कुर्य्याद्भूमिसिद्धार्थसाधनं ॥

इति विष्णुप्रतिष्ठाकालनिर्णयः ।

---

## अथ देवीप्रतिष्ठाकालः ।

देवीपुराणे ।
गुरौ मेषगते शुक्रे देवीञ्चाथ प्रतिष्ठपेत् ।
इहैव स भवेद्धन्यो मृतोगच्छेत्परम्पदम् ॥
तस्मान्मेषगते शुक्रे उत्तमा नवमी स्मृता ।
तथा माघाश्विनौ माषावुत्तमौ परिकीर्त्तितौ ॥
देवी तत्र सदा शक्र-पांशुनापि प्रतिष्ठिता ।
भवते फलदा पुंसां कर्कस्थे च वृषस्थिते ॥
तथाच सिद्ध-गन्धर्वा नृपा वा राज्यकाङ्क्षिणः ।
ते यजन्तु सदा देवीं स्थापयित्वा विधानतः ॥
न तिथिर्न च नक्षत्र नोपवासोऽत्र कारणम् ।
मातृ-भैरव वाराह नरसिंह त्रिविक्रमाः ।

महिषासुरहन्त्र्यस्तु स्थाप्या वै दक्षिणायने ॥

तथाच चतुर्षष्टिप्रतिष्ठायाम्।

ब्रह्मोवाच।

स्थापनञ्च प्रवक्ष्यामि सर्वकामप्रसाधकम्।
सर्वकाल मकर्त्तव्यं कृष्णपक्षे विशेषत. ॥
रात्रिरूपा यतो देवी दिवारूपो महेश्वरः।
अत स्वकालपूजाभि र्सिद्धिदा परमेश्वरी ॥

इति देवीप्रतिष्ठाकालनिर्णय।

---

## अथ वापी-कूपादिप्रतिष्ठाकालः।

वह्निपुराणे।

वापी-कूप तडागानां तस्मिन् काले विधि स्मृत।
सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ॥
कर्कटे पुत्रलाभस्तु सौख्यं तु मकरे भवेत्।
मीने यशोऽर्थलाभस्तु कुम्भे च सुबहूदकम् ॥
वृषे च मिथुने वृद्धिर्वृश्चिके लवण भवेत्।
पितृवश्मिन्तु कन्यायां तुलायां शाश्वती गति।
सिंहे मेषे धननाश लक्ष्मीश्च दिश गच्छति ॥

भविष्योत्तरपुराणे।

तस्मिन् सलिलसम्पूर्णे कार्त्तिके सविशेषतः।
तडागस्य विधिः कार्य्यः स्थिरनक्षत्रयोगतः॥
मुनयः केचिदिच्छन्ति यतीते चोत्तरायणे।
न कालनियमस्तत्र सलिलं तत्र कारणम्॥

इति वाप्यादिप्रतिष्ठाकालनिर्णयः।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये प्रतिष्ठाकालनिर्णयो नाम पञ्चदशोऽध्यायः।

## अथ षोडशोऽध्यायः ।

### अथ दीक्षाकालः ।

अथ नानादेवतादीक्षाकालः कालोत्तरे ।

शरद्वसन्तयोर्योगो दीक्षाकर्मविधौ वरः ।
तयोरसम्भवे वर्षा नान्यथापि प्रशस्यते ॥
दीक्षायामभिषेके च तथा मन्त्रपरिग्रहे ।
शतग्रहणमोक्षे च द्रव्यालम्भनकर्मणि ।
कार्त्तिक्याञ्चैव वैशाख्यां स्वर्भानोरविदर्शने ॥

तत्रैव ।

चन्द्र-सूर्योपरागेषु षडशीतिमुखेषु च ।
मन्त्र-नक्षत्रयोगेषु विषुवत्सुदिनेषु च ।
अयनेषु च सर्वेषु योगः सर्वार्थसिद्धिदः ॥

कारणे ।

पूर्वाषाढे च माघे च आषाढे मृगशीर्षके ।
दीक्षां न कारयेद्धीमान् अन्यमासेषु कारयेत् ।
शुक्लपक्षे शुभर्क्षे च सुवार-तिथिभिर्युते ॥

क्रियाकाण्डशेखरे ।

न विना पर्व दीक्षा स्याद्वर्षासु मधु-पौषयोः ।
अन्यत्र तु सदा कार्य्या विशुद्धौ गुरु-शिष्ययोः ॥

वर्षादौ तु निमित्तानि प्रशस्तान्युपलक्षयेत्॥

वर्षादिषु निषिद्धेष्वपि कालेषु कदाचिच्छुभशकुनाद्युपलम्भे सति दीक्षा कर्त्तव्येत्यर्थः।

प्रसिद्धास्तिथयोराज्ञदर्शनं गुरुपर्व च।

पवित्रका तिथिश्चापि दीक्षाकर्मविधौ वरा॥

रत्नावल्याम्।

चतुर्थीं नवमीं षष्ठीमष्टमीञ्च[1] चतुर्दशीम्।

पूर्णमासीं विना शेषा हिता मुक्तौ मुमुक्षुषु।

आदित्यं मङ्गलं सौरिं त्यक्त्वा वारास्तु भूतये॥

शुभभेदे।

सप्तम्याञ्च नवम्यां वा एकादश्यामथापि वा।

दशम्याञ्च त्रयोदश्यां दीक्षाकर्म प्रशस्यते॥

क्वचित्तु त्रयोदशीममावास्यामिति पाठः।

सितेन्दु-ज्ञ-गुरुस्त्वान्तु परीक्षेत गुणागुणैः।

गुणैर्युक्तास्तु ग्राह्या गुणहीनांस्तु वर्जयेत्॥

कालोत्तरे।

चतुर्थ्यामथवाष्टम्यां चतुर्दश्यां तथैव च।

पूर्णमास्यां प्रकर्त्तव्यं भुक्तिकामैः सिते सदा॥

मुक्तिकामैः कृष्णपक्षे यत्किञ्चित्कर्म चाचरेत्।

दिनच्छिद्राणि मुक्त्वाथ याश्चान्यास्तिथयः स्मृताः॥

तन्त्रसागरसंहितायाम्।

---

(१) षष्ठीं चाष्टमीञ्चेति क॰।

तां तां तिथिं पुरालोच्य तदुक्तां तत्र दीक्षयेत्।

इन्द्र उवाच।

कस्य का तिथिरुद्दिष्टा विशेषं वद नारद।

मन्त्रेष्वेव दीक्षायां विशेषावसरं तथा॥

नारद उवाच।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः।

चतुर्दशी शिवस्योक्ता वाचः प्रोक्ता चयोदशी॥

द्वितीया तु श्रियः प्रोक्ता पार्वत्यास्तु तृतीयका।

नित्यमार्गेषु पार्वत्या अष्टमी च चतुर्दशी॥

अष्टमी गणनाथस्य भानोः प्रोक्ता तु सप्तमी।

एवंमुखास्तु संचेपात्तिथयः परिभाषिताः।

प्रपञ्चेन तिथीः सर्वाः पवित्रारोपणे स्मृताः।

कारणे।

पौष्णं रौहिण्यमादित्यं श्रवणश्चाश्विनी तथा।

सावित्रं त्वाष्ट्र-वायव्ये नैर्ऋतं मैत्रमेव च॥

तिस्र चिरुत्तराख्ये तु श्रविष्ठा च त्रिजन्मभम्।

नक्षत्राणि प्रशस्तानि दीक्षाकर्मणि सुव्रत॥

रत्नावल्याम्।

पौष्णुत्तराणि रौहिण्यः पुष्यकं मृगशीर्षकम्।

हस्तः स्वातिरनुराधा मघा मूलश्च रेवती॥

अभिजिच्छ्रवणश्चेति शिवयोगे चतुर्दशी।

योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः स्मृतः॥

सुकर्मा च धृतिर्वृद्धिर्ध्रुवं सिद्धिश्च हर्षण ।
वरीयांश्च शिवः सिद्धो ब्रह्मा ऐन्द्रश्च षोडश ॥
नित्यानि तानि सर्वाणि प्रशस्तानि विमुक्तये ।
किन्तु देशिकपक्षेकादौ शुभान्यत्रापि पूर्ववत् ॥
प्रतिपत्पूर्वाषाढा च पञ्चमी कृत्तिका तथा ।
पूर्वाभाद्रपदा ज्येष्ठा दशमी रोहिणी तथा ॥
द्वादशी सर्पनक्षत्रमर्यमर्क्षं च त्रयोदशी ।
नक्षत्रलग्ना इत्येते देवानामपि नाशदाः ॥

कारणे ।

राशयश्च चराः श्रेष्ठा मध्यमाश्चोभये स्मृताः ।
स्थिरश्च नैधनस्थाने ग्रहाः सर्वे विवर्जिताः ।
आचार्यशिष्ययोरानुकूल्यं शुभप्रदं भवेत् ॥

क्रियाकाण्डशेखरे ।

राश्यादिवर्गसंशुद्धिर्लग्नचन्द्रार्कयोरपि ।
बलं गोचरशुद्धिश्च योगयास्ते प्रतीयताम् ॥
लग्नदोषा ग्रहदोषाः सर्वे नश्यन्ति ते शुभे ।
लग्नस्थे भार्गवे प्रौढे केन्द्रस्थे च बृहस्पतौ ॥
इत्यादिनिपुणं वीक्ष्य दीक्षा मौमुक्षवीष्यते ।
मौमुक्षवी प्रति न तत्कालादिनियमः स्मृतः ॥
मन्त्रवर्णेषु सिद्धान्वै सुसिद्धान्मेलयेद्बुधः ।
वैवर्ण्यावुदासीनान् गणयेद्दशभिः पृथक् ॥
सिद्धराशौ हरेद्भागं वसुभिर्भानुभिः शरैः ।

शुद्धराशिस्तु यः प्रोक्तोयासे सञ्चोदिता हि सा ॥
रिपुराशिगतः प्रोक्तोमासोऽसौ परिकीर्त्तितः।
इत्येतद्दग्धं भाग तिथिज्ञानाय सम्मतम् ॥
मासि तस्मिंस्तथा यामे कुर्वीत ग्रहणं मनोः।
ज्योतिःशास्त्रात्तुनिर्णीते लग्ने वा दीक्षितो भवेत् ॥

अत्र दीक्षार्थं मन्त्रशास्त्रियैः प्रतिपाद्य तत्त्वसागरसंहितायाम् उक्तं हि।

तिथिं विनापि दीक्षाया विशिष्टावसरं शृणु।
दुर्लभे सद्गुरूणान्तु सदात्मा उपस्थिते।
तदनुज्ञा यदा लब्धा स दीक्षावसरोभवेत् ॥
यामे वा यदि वारण्ये चैत्रे वा दिवसे निशि।
आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत् ॥
आज्ञा दीक्षा तदा ज्ञेया गुरौ च समुपस्थिते।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ॥

इति नानादेवदीक्षाकालः।

---

## अथ विष्णुदीक्षाकालः।

मत्स्यपुराणे।

विज्ञाय मौतिप्रवणं हि शिष्य-
मुदग्गतौ तीक्ष्णकरस्य काले।

सोमस्य वृद्धौ शुभलग्नयुक्ते
मन्त्रोपदेशे कृपया गुरुस्तु ॥

महापञ्चरात्रे ।

द्वादश्यां शुक्लपक्षस्य सूर्य्यसंक्रमणे तथा ।
द्वादश्यां कृष्णपक्षस्य पौर्णमास्यां मुनेऽथवा ॥
अमावास्यायामथवा कालमुद्दिश्य दैशिकः ।
तदेकदिवसात् पूर्वमधिवासनमारभेत् ॥

तत्त्वसागरसंहितायाम् ।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः ।
चतुर्दशी शिवे प्रोक्ता वाचः प्रोक्ता चतुर्दशी ॥

शैवपञ्चरात्रे नवकदीक्षाविषये ।

दीक्षाविधौ वा नवके च काले
स्याद्द्वादशी पञ्चदशी तिथिस्तु ।
एकादशी पञ्चदशी तिथिर्वा
भवेच्चतुर्दश्यथवाष्टमी च ।
याचादिके योगविधौ प्रशस्ता
स्याद्देवतानां नवमी चतुर्थी ॥

इति श्रीमहाराजाधिराज श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परि-शेषखण्डे कालनिर्णये दीक्षाकालो नाम षोडशोऽध्यायः ।

---

## अथ सप्तदशोऽध्यायः ।



### अथ नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

विष्णुधर्मोत्तरे ।

कालस्य द्विविधोज्ञेयः स्थूल-सूक्ष्मोपलक्षितः ।
स्थूलस्य लौकिकोज्ञेयः सूक्ष्मस्याध्यात्मिकस्तथा ॥
सर्वं स्थूले च कर्त्तव्यं स्थूलं कालविधिं शृणु ।
सद्यानकाचिनिनिमिषतुर्य्यभागस्त्रुटिः स्मृतः ॥
तद्द्वयन्तु लवः प्रोक्तो निमेषस्तद्द्वयं भवेत् ।
निमेषाः पञ्चदश काष्ठाः त्रिंशत्काष्ठाः कला स्मृता ॥
त्रिंशत्कला मुहूर्त्तस्य तदेव घटिकाद्वयम् ।
सार्द्धास्य नाडिकाः सप्त यामस्तत्रभिरुच्यते ।
सन्ध्ययोऽष्टौ समाख्याता अहोरात्रं विचक्षणैः ॥
यजनं प्रतिमानन्तु उत्तमन्त्वतिकीर्त्तितम् ।
उदये चैव मध्याह्ने प्रदोषे चार्द्धयामके ॥
यजनं मध्यमं सन्ध्य उदयेऽस्तमनं समं ।
परार्द्धमेषु कालेषु पूजयेत्तु विशेषतः ॥
द्विकालं वा त्रिकालं वा आत्मार्थं संप्रपूजयेत् ।
पूजारम्भाय यत्नन्तं सर्व्वं सन्ध्याविधिं कुरु ॥
सन्ध्यादिकमणाद्दोषाः कृते चेत्तु न दोषकः ।

पूर्वाह्णे चैव मध्याह्ने प्रदोषे बलिमाहरेत् ॥
अन्यासु सर्वसन्ध्यासु नाचरेत्तु बलिक्रमम् ।
अर्द्धयामे बलिं कुर्यात् काम्यार्थी तु विशेषतः ॥
नित्योत्सवे च पूजायां तथा संवत्सरोत्सवे ।
कारयेत्तु विशेषेण अन्यथा नैव कारयेत् ॥
भास्करोदयमारभ्य यावत्तु दश नाडिकाः ।
प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ॥
पूर्वाह्णात्तु समारभ्य यावत्तु दश नाडिकाः ।
मध्याह्न इति विज्ञेयः स्थापनारोपणादिषु ॥
मध्याह्नात्तु समारभ्य यावत्तु दश नाडिकाः ।
सायङ्काल इति प्रोक्तः प्रदोषमधुना शृणु ॥
अस्तमानं समारभ्य सार्द्धाः सप्त च नाडिकाः ।
प्रदोष इति विख्यातस्त्वर्द्धयाममतः शृणु ॥
प्रदोषान्तं समारभ्य त्रिपादेन त्रिनाडिकाः ।
अर्द्धयाम इति प्रोक्तश्चार्द्धरात्रमथोच्यते ॥
अर्द्धयामान्तमारभ्य यावत्तु दश नाडिकाः ।
अर्द्धरात्रमिति प्रोक्तं रात्रिनक्तमथोच्यते ॥
भास्करस्योदयात्पूर्वं त्रिपादेन त्रिनाडिकाः ।
रात्रिनक्तमिति प्रोक्तं ज्ञात्वैव सर्वमाचरेत् ॥
जलसग्रहणं पुष्पसंग्रहं यजनं तथा ।
उदयादेव कर्त्तव्यं रात्र्यन्ते वा जलग्रह ।
देवतास्थापनं तीर्थं प्रातःकाले समाचरेत् ॥

प्रातःकालात्समारभ्य यावद्वै दश नाडिकाः ।
तावद्वापि प्रकर्त्तव्यं तीर्थकार्यं प्रजापते ॥
अङ्कुरार्पणकार्यं तु उत्सवस्याधिवासनं ॥
सायञ्च प्रारभेद्धीमान् रक्षाश्चैव प्रबन्धने ॥
स्नापने प्रोक्षणे चैव गर्भन्यासे तथैव च ।
अधिवासनानि सर्वाणि मध्यरात्रे तु कारयेत् ॥
रात्र्यन्तके विशेषेण सर्वदेवक्रियार्थकं ।
कुर्यात्परं महाशब्दं तदाशुभनिवृत्तये ॥

इति नित्य-नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

---

## अथ विष्णुपूजाकालः ।

तत्र विष्णुधर्मोत्तरे ।

एककालं द्विकालं वा त्रिकालं पूजयेद्धरिं ।
अपूज्य भोजनं कुर्वन् नरकाणि मजेश्वरः ॥

नारदीये ।

प्रातर्मध्यन्दिने सायं विष्णुपूजां समारभेत् ।
यथा सन्ध्या तथा नित्या देवपूजा स्मृता बुधैः ॥
अशक्तो विस्तरेणैव प्रातः सम्पूज्य केशव ।
मध्याह्ने चैव सायञ्च पुष्पाञ्जलिमपि क्षिपेत् ॥
मध्याह्ने वा विस्तरेण सङ्क्षेपेणाथवा हरिं ।
सम्पूज्य भोजनं कुर्यादन्यथा नरकं व्रजेत् ॥

निमित्तेषु च सर्वेषु तत्काले च विशेषतः ।
पूजयेद्देवदेवेशं द्रव्यं सम्पाद्य यत्नतः ॥

इति विष्णुपूजाकालः ।

---

## अथ देवताविशेषपूजने तिथिविशेषाः ।

भविष्यत्पुराणे द्वादशीकल्पे ।

प्रतिपत्पावकी प्रोक्ता द्वितीया ब्रह्मणस्तु ।
तृतीया गिरिपुत्र्यास्तु चतुर्थी विघ्नहारिणः ॥
पञ्चमी नागराजानां षष्ठी स्कान्दी तिथिः स्मृता ।
सप्तमी सप्तसप्तेस्तु अष्टमूर्त्तेस्तथाष्टमी ॥
नवमी योगिनीनान्तु यमस्य दशमी तथा ।
एकादशी धनेशस्य द्वादशी चक्रिणस्तथा ॥
त्रयोदशी त्वनङ्गस्य भूतेशस्य चतुर्दशी ।
पौर्णमासी प्रजेशस्य पितॄणां दर्श उच्यते ॥

*इति देवताविशेषपूजने तिथिविशेषाः ।*

---

## अथ कामनाविशेषात्तिथ्यादिविशेषे देवताविशेषपूजा ।

भविष्यपुराणे ।

अग्निमिष्ट्वा च कृत्वा च प्रतिपद्यमृतं हतम् ।
चविषा सर्वधान्यानि प्राप्नुयादमितं धनम् ॥
*ब्रह्माणञ्च द्वितीयायां सम्पूज्य ब्रह्मचारिणः ।*

भोजयित्वा च विद्यानां सर्वासां पारगो भवेत् ॥
तृतीयायां च वित्तेशं वित्तेशो जायते ध्रुवम् ।
क्रयादिव्यवहारेषु लाभो बहुगुणो भवेत् ॥
गणेशः पूजितः कुर्यात् चतुर्थ्यां सर्वकर्मसु ।
अविघ्नं विदुषां विप्र कार्य्यनाशश्च कर्हिचित् ॥
नागानिष्ट्वा च पञ्चम्यां न विषैरभिभूयते ।
स्त्रियं वा लभते पुत्रान् पराञ्च श्रियमाप्नुयात् ॥
सम्पूज्य कार्त्तिकेयन्तु द्विजः षष्ठ्यां प्रजायते ।
मायावी रूपसम्पन्नो दीर्घायुः कीर्त्तिवर्द्धनः ॥
सप्तम्यां पूजयेत् देवं चित्रभानुं दिवाकरम् ।
अष्टम्यां पूजितो देवो गोचूड़ाभरणो हरः ।
ज्ञानं ददाति विपुलं कामजान् यच्छते गुणान् ॥
मृत्युहा धनदश्चैव पापहा च सुपूजितः ।
दुर्गां संपूज्य दुर्गाणां नवम्यां तरणेच्छया ।
संग्रामे व्यवहारे च सदा विजयमादिशेत् ॥
दशम्यां धर्मराजस्तु सर्वव्याधिहरो ध्रुवम् ।
नरकादपमृत्योश्च समुद्धरति मानवम् ॥
एकादश्यां यथोद्दिष्टा विश्वेदेवाः सुपूजिताः ।
प्रजां पुष्टिञ्च धान्यञ्च प्रयच्छन्ति महीं तथा ॥
द्वादश्यां पूजितो देवः सर्वैश्वर्य्यसमन्वितः ।
बहुपुत्रो बहुधनस्तथा स्यान्नात्र संशयः ॥
त्रयोदश्यान्तु सम्पूज्य कामदेवं सदाननम् ।

पूजितः परया भक्त्या धनं पुत्रांश्च दापयेत् ॥
चतुर्दश्यां महादेव उमाकान्तो जगद्गुरुः ।
सम्पूजितो महाभक्त्या सर्व्वान् कामान् ददात्यसौ ॥
पौर्णमास्याञ्च यः सोमं पूजयेत् भक्तिमान् नरः ।
एकपत्यं भवेत् तस्य इति मे निश्चिता मतिः ॥
अमायां पितरः पिण्डैरिष्टाः कुर्व्वन्ति सर्व्वदा ।
पूजां वृद्धिं धनं रक्षामायुष्यं बलमेव च ॥
उपवासं विनाप्येते भवन्त्युक्तफलप्रदाः ।
पूजिता जपहोमैश्च तोषिता भक्तितः सदा ॥
मूलमन्त्रास्तु संज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः ।
पूर्व्वञ्च पञ्चपञ्चाशः कर्त्तव्याश्च तिथीश्वराः ॥

एतेषाञ्च रूपाणि देवताकाण्डे आलोकनीयानि ।

गन्ध-पुष्पोपहारैश्च यथाशक्ति विधीयते ।
पूजा शाठ्ये न कर्त्तव्या कृतापि न फलप्रदा ॥
आज्यधाराभिरद्भिश्च दधि-क्षीराम्ल-माक्षिकैः ।
यथोक्तफलदो होमो जपः शान्तेन चेतसा ॥
कृत्वा यज्ञं दशाब्दे च[1] फलान्येतानि भक्तितः ।
यथोक्तानि यथोक्तानि लभेतेहाधिकानि तु ॥
इह जन्मन्यथान्यस्मिन् निवसेच्च सुखी सदा ।
तेषां लोकेषु मन्त्रज्ञो यावतीह[2] तिथिः स्मृता ॥
इह तस्मात् परिभ्रष्टमहाज्ञो जायते नरः ।

(१) दश-दे चेति ख॰ ।　　(२) यावतीहेति ख॰ ।

सुरूपो धनसम्पन्नो निर्जितारिर्महीपतिः ।
स्त्रीपुत्रपुंसको वापि जायते पुरुषोत्तम ॥

कूर्म्मपुराणे ।

देवताभ्यर्च्चनं नृणामशेषाघौघनाशनम् ।
अमावास्यां तिथिं प्राप्य यस्त्वाराधयते भवम् ।
ब्राह्मणान् पूजयित्वा तु सर्व्वपापैः प्रमुच्यते ॥
कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्द्दशीम् ।
सम्पूज्य ब्राह्मणमुखे सर्व्वपापैः प्रमुच्यते ॥
त्रयोदश्यां तथा रात्रौ सोपहारन्त्रिलोचनम् ।
दृष्ट्वेशं प्रथमे यामे सर्व्वपापैः प्रमुच्यते ॥
अमावास्यामथावाप्य उद्दिश्य च पितामहम् ।
ब्राह्मणांस्त्रीन् समभ्यर्च्य मुच्यते सर्व्वपातकैः ॥
षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः ।
सप्तम्यामर्च्चयेद्भानुं मुच्यते सर्व्वपातकैः ॥
भरण्याञ्च चतुर्थ्याञ्च शनैश्चरदिने यमम् ।
पूजयेत् सप्तजन्मस्थैर्मुच्यते पातकैर्नरः ॥
एकादश्यां निराहारः समभ्यर्च्य जनार्द्दनम् ।
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ॥

विष्णुधर्म्मोत्तरे ।

मार्कण्डेय उवाच ।

कालं तवाहं वक्ष्यामि देवतापूजने पृथक् ।
उपवासेन सर्व्वत्र सोपवासस्य सर्व्वदा ॥

ब्रह्माणं पूजयेत् देव सततं प्रथमेऽहनि ।
पञ्चद्वये महाभाग पञ्चदश्यामुपोषितः ॥
संवत्सरेण धर्मज्ञ विधाब्जसुवर्णकम् ।
हंसयुक्तेन यानेन ब्रह्मलोकं प्रपद्यते ॥
चैत्रमासस्य या शुक्ला प्रथमा प्रतिपद् भवेत् ।
तदह्नि ब्रह्मणः कृत्वा सोपवासस्तु पूजनम् ।
संवत्सरमवाप्नोति सौख्यानि भृगुनन्दन ॥
कालस्यावयवाः सर्वे तस्मिन्नहनि पूजिताः ।
प्रहर्षांश्च च धर्मज्ञ सौख्यं दद्युरनुत्तमम् ॥
संवत्सराधिपं नागं तस्मिन्नहनि पूजयेत् ।
पश्चाच्च सौख्यमाप्नोति स्वास्थ्यमत्यन्तथैव च ॥
तथाग्निं ब्रह्मणा सृष्टं त्रैलोक्ये प्रथमं द्विज ।
एवं प्रजापतिं नित्यं द्वितीयायामथार्चयेत् ।
फलमाप्नोति धर्मज्ञ गोमेधस्य न संशयः ॥
तथा नासत्ययोः कृत्वा तस्मिन्नहनि पूजनम् ।
नित्यमारोग्यमाप्नोति तथा रूपञ्च भार्गव ॥
शुक्लपक्षे द्वितीयायां बालचन्द्रस्य पूजनम् ।
कृत्वा दत्त्वा च लवणं नायाचौ सुभगो भवेत् ॥
आद्या द्वादश ये मासास्तेषां कृत्वा तु पूजनम् ।
तृतीयायां महाभाग द्वादशाहफलं भवेत् ॥
तृतीयायां तदाभ्यर्च्य ब्रह्म-विष्णु महेश्वरान् ।
पृथक् पृथक् महाभाग त्रिवर्गफलभाग् भवेत् ॥

चैत्रे लोकाय तदा नाम सम्यक् संपूज्य यत्नतः ।
ऐश्वर्यं महदाप्नोति गतिमय्याञ्च विन्दति ॥
तृतीया श्रावणे कृष्णा या स्यात् श्रवणसंयुता ।
तस्यां संपूज्य गोविन्दं पुष्टिमय्यामवाप्नुयात् ॥
वैशाखे शुक्लपक्षे तु तृतीयायामुपोषितः ।
अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य च ॥
सा तस्मात् कृत्तिकोपेता विशेषेण सुपूजिता ।
तत्र दत्तं हुतं जप्तं सर्व्वमक्षयमुच्यते ॥
अक्षया सा तिथिस्तस्मात् तस्यां सुकृतमक्षयम् ।
अक्षतैः पूजितो विष्णुस्तेन साप्यक्षया मता ॥
अक्षतैस्तु नरः स्नातो विष्णोर्दत्त्वा तथाक्षतान् ।
वरान् सुसंस्कृतांश्चैव कृत्वा चैव तथाक्षतान् ॥
विप्रेषु दत्त्वा तानेव तथा शक्तून् सुसंस्कृतान् ।
यवान्नं सुमहाभाग फलमक्षयमश्नुते ॥
एकामप्युक्तवत् कृत्वा द्वितीयां भृगुनन्दन ।
एतासन्द्वतीयानां सर्वासान्तु फलं लभेत् ॥
प्रोक्तास्तु भृगवो नाम देवा द्वादश ये पुरा ।
. चतुर्थी पूजनं तेषां कृत्वा दिवमवाप्नुयात् ॥
यमराजपूजनं कृत्वा चतुर्थ्यामेव धार्मिकः ।
नाप्नोति नारकं दुःखं तुष्टे रविसुते नरः ॥
विनायकमथाभ्यर्च्य चतुर्थी यदुनन्दन ।
सर्वविघ्नविनिर्मुक्तः कार्य्यसिद्धिमवाप्नुयात् ॥

निद्रां रतिं तथा श्रद्धां कीर्त्तिं मेधां सरस्वतीम् ।
प्रज्ञां पुष्टिं तथा कान्तिं तत्रैवाहनि पूजयेत् ॥
तत्प्रसादादवाप्नोति यथेष्टं मनुजोत्तम ।
विद्याकामो विशेषेण पूजयेच्च सरस्वतीम् ॥
देवानां मातरः सर्वास्तत्र तथाह्नि पूजिताः ।
सर्वकामप्रदा ज्ञेयाः पुरुषस्य विपश्चितः ॥
पञ्चम्यां पूजनं कृत्वा तथा च मनसा नरः ।
सौभाग्यं महदाप्नोति यत्प्राप्यान्यद्य विन्दति ॥
पञ्चम्यां पृथिवीं देवीं तथा संपूजयन्नरः ।
नाप्नवाप्नोति यत्नेन नात्र कार्या विचारणा ॥
विश्वेदेवास्तु ये प्रोक्ताः पूर्वमेव मया द्विज ।
तेषां संपूजनं कृत्वा पञ्चम्यां दिवमाप्नुयात् ॥
इष्टं गन्धर्वमभ्यर्च्य पञ्चम्यां सुभगो भवेत् ।
तथा चित्ररथं तेषां राजानन्तु विशेषतः ॥
देवभार्यास्तथा सर्वाः संपूज्य सुभगो भवेत् ।
दृष्ट्वा त्वप्सरसश्चैव तथा रूपमवाप्नुयात् ॥
इष्टं नागं तथाभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ।
वारुणे पुष्करस्यार्थां पञ्चम्यां सुसमारभेत् ॥
सर्वकामसमृद्धस्य यज्ञस्य सफलं भवेत् ।
तथा च पूजयेद्राजन् तथैव नलकूबरम् ॥
श्रियः संपूजनं कृत्वा पञ्चम्यां प्रयतः सदा ।
श्रियमाप्नोति विपुलां संवत्सरमयोदिताम् ॥

सर्वेषां नृप पञ्चम्यां रतिं प्रीतिं सरस्वतीम् ।
उमां मेधां भद्रकालीं तथा कात्यायनीमपि ॥
धृतिं स्वाहां स्वधां वृद्धिं अनसूयां तथा क्षमाम् ।
सुरभिं देवसेनाञ्च वेलां ज्योत्स्नां तथा शचीम् ॥
गौरीं वरुणपत्नीञ्च यमपत्नीं तथैव च ।
धूम्राख्यां सुमहाभागां मृत्युच्छायां तथैव च ॥
अभीष्टदेवजननीं देवपत्नीं तथैव च ।
पूजयेत् काममाप्नोति सर्वान्कामानसंशयम् ॥
ऐरावतञ्च गरुडमुच्चैःश्रवसमेव च ।
वरुणं वृषभञ्चैव मत्स्याद्यस्त्राणि यानि च ।
तथा सम्पूजयेद्राजन् विजयं समुपाश्नुते ॥
तथा भाद्रपदे मासि शुक्लपक्षस्य पञ्चमी ।
नागसम्पूजनं कृत्वा धनभागी भवेन्नरः ॥
कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा ।
चतुरात्मविनिर्दिष्टो भगवान् क्रौञ्चसूदनः ॥
तमभ्यर्च्य नरः षष्ठ्यां पुत्रानाप्नोत्यभीप्सितान् ।
बालानां पूजनात् श्रेयो नरः प्राप्नोत्यसंशयम् ॥
रुद्रस्य पूजनं तत्र कृत्वा तु सुखमाप्नुयात् ।
स्कन्दपार्श्वचरान् राजन् रुद्रपार्श्वचरानपि ।
यमपार्श्वचरांश्चैव रोगमुक्तिमवाप्नुयात् ॥
कालपाशांस्तथाभ्यर्च्य सूर्य्यपत्नीं सुवर्चसम् ।
इष्टान् कामानवाप्नोति नात्र कार्य्या विचारणा ॥

एवमेकोनपञ्चाशत् मरुतो नाम कीर्त्तिताः ।
तेषां सम्पूजनं कृत्वा सप्तम्यां दिवमाप्नुयात् ॥
इष्टस्य पूजां शैलस्य तदा कृत्वा सुखी भवेत् ।
पूजयित्वा तथाभीष्टं सरितं सुखभाग् भवेत् ॥
वह्निसम्पूजनं कृत्वा वह्निष्टोममवाप्नुयात् ।
वायोः सम्पूजनं कृत्वा प्राप्नोति परमां गतिम् ॥
सम्पूज्य च नदीन् सप्त गोमयज्ञास्तु ये स्मृताः ।
सद्गा प्राप्नोति तानेव गतिमग्र्यास्तु विन्दति ॥
सप्तम्यां यदुशार्दूल इष्टमभ्यर्च्चयेन्मुनिम् ।
स्वाध्यायफलमाप्नोति तदापि फलमश्नुते ॥
पूजयित्वा समुद्रांश्च द्वीपमध्ये तदा नरः ।
पातालस्थान् महाभाग भुवमाप्नोत्यभीप्सिताम् ॥
सप्तलोकांस्तथा तत्र पूजयित्वा सुखी भवेत् ।
धीदाश्चैव तथैवाप्यां गतिमप्रमितां लभेत् ॥
गङ्गां सप्तप्रकाराश्च तथा देवीं सरस्वतीम् ।
सप्त यज्ञानवाप्नोति नरः सम्पूज्य वै भुवम् ॥
आदित्यं पूजयित्वा वै शीघ्रं रोगैः प्रमुच्यते ।
सप्तम्यां यादवश्रेष्ठ गतिमग्र्यास्तु विन्दति ॥
एकानंशां तदा देवीं तथा सम्पूजयन्नरः ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥
नरेन्द्रपूजनं कृत्वा गतिमग्र्यां तथा लभेत् ।
अष्टम्यां प्रमथनयं पूजयित्वा सुखी भवेत् ॥

अष्टम्यां पूजनं कृत्वा वसूनां धर्मवित्तमः[1] ।
नाकलोकमवाप्नोति वञ्चिश्च[2] मनसेप्सितम् ॥
चतुष्पथेषु रथ्यासु तथैवोदूखलेषु च ॥
गिरिशृङ्गेषु रथ्यासु नदीतीरेषु चाप्यथ ।
गुहासु च गवां रथ्यां[3] पिशाचानां बलिं हरेत् ॥
शक्रादीनाञ्च देवानां कृत्वा सम्पूजनं ततः ।
तेषां बलिं विनिक्षिप्य क्षेममाप्नोति मानवः ॥
आयुधं पूजयित्वा तु तदा विजयमाप्नुयात् ।
दशम्यां पूजयित्वा वै विश्वदेवांस्तथा दश ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सम्पूजयेद्राजन् तथैव च दिशो दश ।
क्रियासु फलमाप्नोति यत्र यत्राभिजायते ॥
धर्मं सम्पूज्य देवेशं सर्वसत्त्वसुखावहम् ।
धर्म्यां गतिमवाप्नोति धर्म्यञ्च फलमेव च ॥
एकादश्यान्तु संपूज्य रुद्रानेकादश प्रभो ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सर्वगतान् रुद्रान् सुदा[4] सर्वत्र पूजयेत् ।
सर्व्वान् कामानवाप्नोति सर्व्वगानपराजितान् ॥
तथा च द्वादशादित्यान् द्वादश्यां पूजयेन्नरः ।

---

(१) धर्म्मवित्तम इति क० । (२) वञ्चि चेन्मनसि स्थितमिति क्वचित्पाठः ।
(३) रथ्या प्राप्येत्यर्थः । (४) सदेति ग० ।

द्वादश्यां समवाप्नोति गतिमग्र्याञ्च विन्दति॥
द्वादश्यां देवदेवेश पूजयित्वा जलाधिपम्।
पुण्डरीकमवाप्नोति वरुणं यादसां पतिम्॥
सर्व्वदेवेश्वरं शक्रं पूजयित्वा तथा नरः।
सर्व्वान् कामानवाप्नोति स्वर्गलोकञ्च गच्छति॥
विष्णोः सपूजनं कृत्वा कामानाप्नोत्यभीप्सितान्।
दृष्टमर्थ्यं फलं प्राप्य गतिमग्र्याञ्च विन्दति॥
त्रयोदश्यामथाभ्यर्च्य कामदेवं जगत्पतिम्।
सौभाग्यं सदवाप्नोति गतिमग्र्याञ्च विन्दति॥
चैत्रशुक्लत्रयोदश्यां कामदेवमथार्च्चयेत्।
अर्च्चनात् सर्व्वमाप्नोति फलं सवत्सरोदितम्॥
यक्षाणां राक्षसानाञ्च चतुर्द्दश्यान्तु पूजनम्।
कृत्वा चेममवाप्नोति क्रियाथाफल्यमेव च॥
पूजयित्वा धनाध्यक्षं तदा वैश्रवणं प्रभुम्।
बहुवित्तमवाप्नोति फलं सवत्सरोदितम्॥
शङ्ख-पद्मौ तथाभ्यर्च्य निधाने यत्नपूजिते।
मणिभद्रं तथाभ्यर्च्य धनं प्राप्नोत्यसंशयम्॥
पूजयित्वा महादेवं सर्व्वान् कामानवाप्नुयात्।
माघमासे चतुर्द्दश्यां कृष्णपक्षे विशेषतः॥
तथा पितृगणान् राजन् चीणचन्द्रे तु पूजयेत्।
सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते॥
श्राद्धं कृत्वा तथा राजन् सर्वान् कामानवाप्नुयात्।

स्वर्णमिन्दुं तथाभ्यर्च्य सौभाग्यं महदाप्नुयात् ॥
दृष्ट्वा ग्रहमथाभ्यर्च्य नक्षत्रमथवा नृप ।
तस्मात् क्षेममवाप्नोति कामञ्च यदुनन्दन ॥
माघनाम च नक्षत्र करणं योगमेव च ।
पूजयित्वा तथा राजन् सौभाग्यं महदाप्नुयात् ॥
सोमपदास्तु नक्षत्र नक्षत्रेशमथार्चयेत् ।
नक्षत्रवामभागे च तस्मात् काममवाप्नुयात् ॥
कार्त्तिकेय महाभाग कृत्तिकास्वर्चयेन्नर ।
वह्निष्टोममवाप्नोति कुलञ्चैव समुद्धरेत् ॥
कृत्तिकासु तथाभ्यर्च्य खड्गं विजयमाप्नुयात् ।
भोगिनं नागमभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ॥
कामदेवमथाभ्यर्च्य भाग्यं सौभाग्यमाप्नुयात् ।
सावित्रे च तथा हस्ते जप्त्वा साफल्यमाप्नुयात् ॥
दण्डधरार्चितं देवं तस्मात् यममेव च ।
गन्धर्व्वं वा यक्षं वापि तस्मात् कामानवाप्नुयात् ॥
कृष्णपक्षे चतुर्दश्यां महाकालमथार्चयेत् ।
सर्व्वान् कामानवाप्नोति तथेश नात्र संशयः ॥
महेश्वरं मातृगणं तथा वह्निं प्रपूजयेत् ।
एकां वा मातरं राजन् काममाप्नोत्यभीप्सितम् ॥
तथा तुम्बुरुगन्धर्व्वपञ्चकं पूजयेन्नरः ।
सर्व्वत्र जयमाप्नोति नात्र कार्य्या विचारणा ॥
कृत्तिकासु नरोऽभ्यर्च्य स्कन्दपार्षदांस्तथा ।

आरोग्यं महदाप्नोति सदा वा मनसेप्सितम् ॥
नृसिंहप्रतिमाश्चैव पूर्णचन्द्र समर्चयेत् ।
नरो मातृगणान् राजन् सर्वकाममनोरमान् ॥
एका वा मातरं राजन् कामानाप्नोत्यभीप्सितान् ।
वानस्पत्यमवाप्नोति पूजयित्वा वनस्पतीन् ॥
देवानां मानवानाञ्च तत्त्वज्ञा ये तथापरे ।
तेषां सम्पूजनं कृत्वा चतुर्दश्यां सुखी भवेत् ॥
करणे वा मुहूर्त्ते वा यथावद् देवमर्चयेत् ।
तस्मात् काममवाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रमासमथारभ्य यथोक्तेऽह्नि नरः सदा ।
इष्टदेवमथाभ्यर्च्य यथोक्तं फलमश्नुते ॥
सम्वत्सरेण धर्मज्ञ नक्षत्रे यदि वा तिथौ ।
यष्टेषु सर्वधर्मज्ञ सोपवासः समाहितः ॥
सम्वत्सरे चायनयोः ऋतौ मासे च तद्दले ।
नक्षत्रे सयत पूजा कृत्वा तत्स्वामिनं सदा ।
तावत्कालं महाभाग तस्मात् काममवाप्नुयात् ॥
चैत्रात् समारभ्य महानुभाव
रोचेत यस्तु सुरमर्चयानः ।
तस्येह तोषात् परमं स कामम्
प्राप्नोति यत्नात् यदुवंशचन्द्र ॥

इति कामनाविशेषेण तिथ्यादिविशेषे देवताविशेषपूजा ।

---

## अथ कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

देवीपुराणे ब्रह्मोवाच ।

देवता यत्र नक्षत्रे यदा दृष्टिस्थिता तदा ।
अभ्यर्च्यो यत्नदेवस्तु तदा स फलभाग् भवेत् ॥
देवताश्च प्रवक्ष्यामि नक्षत्राणां यथाक्रमम् ।
नक्षत्राणि च सर्वाणि यज्ञांश्चैव पृथक् पृथक् ॥
अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः ।
व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीड़ितः ॥
भरण्यां यममभ्यर्च्य कुसुमैरसितैः शुभैः ।
तथा गन्धादिभिः शुभ्रैरपमृत्योर्विमुच्यते ॥
अनलः कृत्तिकायान्तु ऋद्धिं सम्पूजितः पराम् ।
(१)रक्तमाल्यादिभिर्दद्यात् घृतहोमेन च ध्रुवम् ॥
इष्टः प्रजापतिः पूज्य इष्टान् दद्यात्पशूंस्तथा ।
रोहिण्यां देवशार्दूल दद्याच्च हरिकुञ्जरान् ॥
मृगशीर्षे तथा सोमं पयसारोग्यमेव च ।
आर्द्रायान्तु शिव पूज्य पशून् विजयमश्नुते ॥
सितैः पद्मादिभिर्द्रव्यैर्देवत्वं पयसा च वै ।
पुनर्वसौ चाप्यदिति सदा सम्पूजकादिभिः ॥
वरुणा तर्पिता चैव तामेव परिरक्षति ।

(१) रुक्मेति ग०।

तिष्ये वृहस्पतिस्तुष्टिं ददाति विपुलं धनम् ॥
पान-गन्धादिभिर्नागा अश्लेषायां प्रपूजिताः ।
तर्पितस्तु पितृगणो भक्ष्याद्यैर्मधुरैः शुभैः ॥
मघायां विशयन्दद्यात् पूर्व्वायान्तु भगस्तथा ।
भर्त्तारमीप्सितं कुर्य्यात् कन्यायाः पुरुषस्य च ॥
इह जन्मनि चायुष्यमुत्तरस्यां तथार्य्यमा ।
पूजितः सविता हस्ते विश्वतेजोनिधिः सदा ॥
शस्तैः पुष्पादिभिः सर्व्वैर्ददाति विपुलन्धनम् ।
राज्यं लष्टा च चित्रायां निष्कण्टकं प्रयच्छति ॥
स्वात्यां सन्तर्पितोवायुर्दद्यादायुर्बलं परम् ।
इन्द्राग्नी च विशाखायां पीतरक्तैः प्रपूजयेत् ॥
धनं राज्यं बलं स्नेहस्तेजांसि निवर्षेत् सदा ।
अनुराधां समासाद्य मित्रं सम्पूज्य भक्तितः ॥
प्रियो भवति सर्व्वेषां निर्मलं चित्तमाप्नुयात् ।
ज्येष्ठायां पूर्ववच्छक्रमिष्ट्वा पुष्टिमवाप्नुयात् ॥
गुणैः सर्व्वैश्च सम्पूज्य कर्मणा च धनेन च ।
मूले तु निर्ऋतं सम्यक् भक्त्या सम्पूज्य पूर्व्ववत् ॥

इति कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

---

## अथ निमित्तनक्षत्रादेः संयोगविशेषे देवताविशेषपूजा।

देवीपुराणे ब्रह्मोवाच।

शृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि।
अल्पक्लेशं महापुण्यं यदृक्षं-तिथियोगिकम्॥
शृणु कृष्णाष्टमीयोगं शिवयोगेषु चोत्तमम्।
मृदुवर्गश्च भाग्यश्च वमया भृगुवासरे॥
दैवयोगाद्यदा षष्ठी पुष्यर्क्षे रविवासरे।
स्कन्दयागस्तदा कार्य्यः सर्वकामप्रसाधकः॥
यदा तु सूर्य्यवारेण सप्तमी विजया तु सा।
तदा सम्भवते भानोर्यागः सर्वगुणावहः॥
शशिदिक्तासमायोगे आर्द्रर्क्षे मातृपूजनम्।
माघाद्याः कालिकाद्यास्तु यष्टव्या विधिना मुने।
सम्पूर्णं फलमाप्नोति स्वस्थाने चेश्वरो भवेत्॥
पुष्पैरिष्ट्वा जलं शेतैः पूर्वाह्णे च पूर्ववत्।
स पापात् मुच्यते क्षिप्रं शारीरात् मानसात्तथा॥
आषाढ़ासु तथा विद्वानुत्तराषाढयोगतः।
विश्वान् सम्पूज्य पुष्पाद्यैः स्वर्गमाप्नोति चात्मनः॥
श्रावणे त्वसिते विष्णोः पुष्पैर्धूपैश्च भक्तितः।
सन्तर्प्य श्रियमाप्नोति धनं विजयमेव च॥
धनिष्ठाणां वसुनिष्ठा न भयं विन्दते क्वचित्।
महान्तोऽपि तथा तेषां गन्ध-पुष्पादिभिः शुभैः।

वरुणन्तु समभ्यर्च्य व्याधिभिर्मुच्यते स्रग्म ॥
आतुरः पुष्टिमाप्नोति स्वास्थ्यमैश्वर्यमेव च ।
अजं भाद्रपदायान्तु शुद्धस्फटिकसन्निभम् ।
सम्पूज्य मुक्तिमाप्नोति नात्र कार्य्या विचारणा ॥
उत्तरायामहिर्बुध्नं पराङ्गतिमवाप्नुयात् ।
रेवत्यां पूजितः पूषा ददाति सततं पशून् ॥
श्रितिः पुष्टिं स्थितिं चैव धृतिं विजयमेव च ।
यत्र चैते समाख्याता यज्ञाः सङ्क्षेपतो मया ॥
नक्षत्रदेवतानाञ्च साधकानां हिताय वै ।
भक्त्या वित्तानुसारेण भवन्ति फलदा ध्रुवम् ॥
गन्तुं चेच्छेद् यदा ग्रामं यात्रायां ध्रुवमेव च ।
नक्षत्रदेवतायज्ञं कृत्वा तत्सर्वमाचरेत् ।
एवं कृते हि तत्सर्वं यात्राफलमवाप्नुयात् ॥
क्रियाफलञ्च सम्पूर्णमित्युक्तं भानुना स्वयम् ।
यज्ञाभावे जपङ्कुर्य्याद्धोमङ्कुर्य्याद्यथेप्सितम् ॥
इति तिथिनक्षत्रादिसंयोगविशेषे देवताविशेषपूजा ।

---

## अथ पवित्रारोपणकालः ।

तत्र शिवपवित्रारोपणकालः ।
शिवधर्म-भविष्यत्पुराणयोः ।
पौर्णमास्यां तथा षष्ठ्यां शिवं सम्पूज्य यत्नतः ।

उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् ॥
पुनरेव च कार्त्तिक्यां पूज्य शम्भुं क्षमापयेत् ।
यतिभ्यो दक्षिणां दद्यात् सूत्रवस्त्रादिपूर्विकाम् ॥
यः कुर्यात्सह्ह्रदयेवं चातुर्मास्यं पवित्रकम् ।
कल्पकोटिशतं दिव्यं रुद्रलोके महीयते ॥
पुण्यक्षयात्परिभ्रष्टश्चतुर्वेदश्च जायते ।
इहागतो भवेद्राजा गुणरूपसमन्वितः ॥

शिवरहस्ये ।

पवित्रारोपणं शम्भोः कुर्य्यान्नभसि वा शुचौ ।
चतुर्द्दश्यामथाष्टम्यामधिवास्य विधानतः ॥
श्रावणे प्रौष्ठपद्यां वा पवित्रारोपणन्तु यः ।
कुरुते नापवित्र(१) स्यात्तस्य संवत्सरान्तरा ।
शम्भोः पवित्रमारोप्य रिक्तः सम्पूर्णतामियात् ॥
पवित्रात्तु पवित्रन्तु शान्वयं भृगुनन्दन ।
अपवित्रं पवित्रं स्यादैहिकर्माखिलं नृणाम् ॥

कालोत्तरे ।

पूजां कृत्वा प्रकर्त्तव्यं नित्यमेव पवित्रकम् ।
अथवा नियमेनैव कुर्य्यान्मासचयान्तरे ॥
आषाढ़ान्ते चतुर्द्दश्यां नभस-नभसोस्तथा ।
अष्टम्याञ्च चतुर्द्दश्यां पक्षयोरुभयोः समम् ।
पवित्रारोपणं कार्य्यं न तु कालान्तरे स्थितम् ॥

(१) अपवित्रमिति मात्रयाऽलोपनिर्देशः अपवित्रमित्यर्थः ।

एवं काले द्यतिक्रान्ते प्रायश्चित्तं समाचरेत् ।
भौतिकानां विशेषेण शुक्लपक्षे त्वयं विधिः ॥

(१)आषाढान्ते चतुर्द्दश्यामिति पौर्णमास्यां चान्द्रमासविवक्षया आषाढशुक्लचतुर्दश्यामित्यर्थः ।

तथाच मोक्षधर्मोत्तरे ।

आषाढस्य तथादिष्टा श्रावणस्य सितासिता ।
सप्तम्याञ्च चयोदश्यां तत्र गन्धपवित्रकम् ॥
चयोदश्यां प्रकर्त्तव्यं पवित्रं गन्धसंज्ञितम् ।
पवित्रमथ भूतायामाषाढनियमः स्मृतः ॥

एवं सत्यपि विष्णुस्वापाभावे न कर्त्तव्यम्, किन्तु विष्णुस्वापानन्तरमेव कर्त्तव्यम् ।

उक्तञ्च ।

आषाढेऽपि न कर्त्तव्यमसुप्ते मधुसूदने ।
कालोऽप्यनियतस्तत्र श्रूयतां विधिनिर्णयः ॥
शुक्लाषाढचतुर्दश्यां कुर्याच्छ्रावण-भाद्रयोः ।
अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि ॥

नन्वाषाढचतुर्द्दश्यामित्यनेनैव(१) विष्णुस्वापानन्तरकालः स्वयमेव लभ्यते, तत्र किमिति प्रसुप्त एव मधुसून इति । सत्यम् । किन्तु आषाढस्यावद्विविधत्वान्द्रः सौरश्चेति तत्र चान्द्रे सर्वकालं स्वपिति पुनरधिकमासे सौरमासिककर्कटसङ्क्रान्त्यावेव विष्णुः स्वपितीत्येतदुक्तमिति न दोषः ।

(१) न चाषाढचतुर्द्दश्यामित्यनेनैवेति ख० ।

